शेठ देवचंद लालभाई जैन पुस्तकोद्धार फण्ड.

PRAKIRNAKA.

Tandula-vaicharika and Chatuhsarana. Two Jain Prakrit tracts on Jain religious pracrice, the second being ascribed to Virabhadra. With Sanskrit commentaries, viz. Vijayavimala's Vritti on the first and an anonymous gloss on the second.] ff.78. Bombay 1922. obl.fol.

[Devchand Lalbhai Jaina-pustakoddhara Fund. no.59.]

पुरा–सुरत.

६०००–८–२४.

धी न्यु लक्ष्मी प्रिन्टिंग प्रेस.
शाकगली मांडवी, मुंबई. ३.

श्रेष्ठि–देवचन्द्र–लालभाई–जैनपुस्तकोद्धारे–ग्रन्थाङ्कः–५९.

प्रत्नपूर्वधरनिर्मितं

# श्रीतन्दुलवैचारिकं

श्रीमद्विजयविमलगणिदृब्धवृत्तियुतं, सावचूरिकं च

## चतुःशरणं

प्रसिद्धिकारकः–जीवनचन्द्र साकरचन्द्रः अस्याः कार्यवाहकः।
बुहारि वास्तव्य श्रेष्ठि–सुरचन्द्र खेताजीविहितद्रव्यसहायेन
निर्णयसागरयन्त्रणालये कोलभाटवीथ्यां २३ तमे रामचंद्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम्.

वीरसंवत् २४४८. विक्रमसंवत् १९७८. क्राइष्ट १९२२.

प्रति १००० ] पण्यं सार्धरूप्यकः। [ Rs. 1-8-0

बुहारी वास्तव्य शाह छगनलाल अपर नाम पीताम्बरदास सुरचन्द तथा सुरचन्द खेताजीविहितद्रव्यसाहाय्येन

Printed by Ramchandra Yesu Shedge, at the Nirnaya-sagar Press, No. 23, Kolbhat Lane, Bombay.

Published by Shâha Jivanchand Sakerchand, for Sheth Devchand Lâlbhâi Jain Pustakoddhâr fund, at the office of Sheth Devchand Lâlbhâi Jain P. Fund, No 426 Javeri Bazar, Bombay.



## श्रेष्ठी देवचंद लालभाई जव्हेरी.

जन्म १९०९ वैक्रमाब्दे
कार्तिकशुक्लैकादश्यां, सूर्यपूरे

निर्याणम् १९६२ वैक्रमाब्दे
पौषकृष्णतृतीयायाम्, मुम्बय्याम्.

**The Late Sheth Devchand Lalbhai Javeri.**

Born 1853 A. D. Surat. Died 13th January 1906 A. D. Bombay.

10000-1-21.

श्रेष्ठी-देवचंद-लालभाई-जैनपुस्तकोद्धार-ग्रन्थाङ्के—

श्रीआनन्दविमलसूरिशिष्यप्रवरश्रीविजयविमलविहितविवृतियुतं

# श्रुतस्थविरदृब्धं तन्दुलवैचारिकप्रकीर्णम् ।

ऋषभं वृषसंयुक्तं, वीरं वैरनिवारकम् । गौतमं गुणसंयुक्तं, सिद्धान्तं सिद्धिदायकम् ॥ १ ॥
प्रणम्य स्वगुरुं भक्त्या, वक्ष्ये व्याख्यां गुरोः शुभाम्[1] । तन्दुलाख्यप्रकीर्णस्य[2], वैराग्यरसवारिधेः ॥ २ ॥

ननु कियन्ति प्रकीर्णकानि कथ्यन्ते, कथं तेषां चोत्पत्तिः ?, उच्यते 'नंदी १ अणुओगदाराइं २ देविंदत्थओ ३ तंदु-लवेयालियं ४ चंदाविज्झय ५ मित्यादीनि श्रीनन्दीसूत्रोक्तानि कालिकोत्कालिकभेदभिन्नानि चतुरशीतिसहस्रसंख्यानि प्रकीर्णकान्यभवन् श्रीऋषभस्वामिनः, कथं ?, ऋषभस्य चतुरशीतिसहस्रप्रमाणाः श्रमणा आसीरन्, तैरेकैकस्य विरचि-तत्वात् १, एवं संख्येयानि प्रकीर्णकसहस्राणि आसीरन्नजितादीनां मध्यमं[3]जिनानां, यस्य यावन्ति भवन्ति तस्य तावन्ति

१ गुरुक्रमामित्यपि २ प्रकीर्णतन्दुलाख्यस्येत्यपि ३ ०नामपि जिनानामित्यपि

प्रथमानुयोगतो वेदितव्यानि २, चतुर्दशप्रकीर्णकसहस्राणि आसीरन् वर्द्धमानस्वामिनः ३ इति, तेषां मध्ये श्रीवर्द्धमानस्वामिस्वहस्तदीक्षितेनैकेन साधुना विरचितमिदं तन्दुलवैचारिकं प्रकीर्णकं, तस्य व्याख्या क्रियत इति—

**निज्जरियजरामरणं वंदित्ता जिणवरं महावीरं । वुच्छं पयण्णयमिणं तंदुलवेयालियं नाम ॥ १ ॥**

**'निज्जरिय'०** निर्जरितं—सर्वथा क्षयं नीतं जरा च—वृद्धत्वं मरणं च—पञ्चत्वं जरामरणं यद्वा जरया—वृद्धभावेन जरायां-वृद्धभावे वा मरणं जरामरणं येन स निर्जरितजरामरणस्तं, वन्दित्वा-कायवाङ्मनोभिः नत्वा जिनाः—रागद्वेषादिजयनशीलाः सामान्यकेवलिनस्तेषु तेभ्यो वा वरः—प्रधानोऽतिशयापेक्षया श्रेष्ठो जिनवरस्तं जिनवरं, अतिशयस्वरूपं **समवायाङ्गोक्तं** यथा—'चोत्तीस बुद्धातिसेसा पं० तं०—अवट्ठिए केसमंसुरोमणहे १ निरामया णिरुवलेवा गायलट्ठी, अयं जन्मप्रत्ययः २ गोखीरपंडुरे मंससोणिए, जन्मप्रत्ययः ३ पउमुप्पलगंधिए उस्सासनिस्सासे, जन्मप्रत्ययः ४ पच्छण्णे आहारणीहारे अदिस्से मंसचक्खुणा, जन्मप्रत्ययः ५ आगासगयं चक्कं ६ आगासगयं छत्तं ७ आगासियाओ सेयवरचामराओ ८ आगासफालियमयं सपायपीढं सीहासणं—आकाशमिव—यदत्यन्तमच्छं स्फटिकं तन्मयं ९ आगासगओ कुडभीसहस्सपरिमंडियाभिरामो इंदज्झओ पुरओ गच्छति १० जत्थ जत्थविय णं अरहंता भगवंतो चिट्ठंति वा निसीयंति वा तत्थ तत्थविय णं तक्खणादेव संछण्णपत्तपुप्फपल्लवसमाउलो सच्छत्तो सज्झओ सघंटो सपडाओ असोगवरपायवो अभिसंजायति ११ ईसिं

१ तानि च तीर्थस्वामिस्वहस्तदीक्षितसाधुविरचितानि वा तीर्थकरतीर्थसाधुविरचितानि वा प्रत्येकबुद्धविरचितानिवेति, अत्रादौ ग्रन्थकारो मङ्गलाद्यभिधानाय गाथामाहेत्यपि २ स्तुतिं विधायेत्यपि



पिट्ठओ मउडट्ठाणंमि तेयमंडलं अभिसंजायति, अंधकारेविय णं दस दिआसो पभासेइ, ईषद्—अल्पं **'पिट्ठओ'** त्ति पृष्ठतः पश्चाद्भागे 'मउडठाणंमि'त्ति मस्तकप्रदेशे १२ बहुसमरमणिज्जे भूमिभागे १३ अहोसिरा कंटगा भवन्ति १४ उऊ विवरीया सुहफासा भवन्ति १५ सीयलेणं सुहफासेणं सुरभिणा मारुएणं जोयणपरिमंडलं सव्वओ समंता संपमज्जिज्जइ १६ जुत्तफुसिएण य मेहेण निहयरयरेणुयं कज्जइ—'जुत्तफुसिएणं'ति उचितबिन्दुपातेन 'निहयरयरेणुयं'ति वातोद्धमातमाकाशवर्त्ति रजः भूवर्ती तु रेणुरिति गंधोदकवर्षाभिधानः १७ जलथलयभासुरप्पभूएणं बिंटट्ठाइणा दसद्धवन्नेणं कुसुमेणं जाणुस्सेहपमाणमित्ते पुप्फोवयारे कज्जइ', एतेन सूत्रेण यत् केचिदाहुः—वैक्रियाण्येवैतान्यतोऽचित्तानीति तदयुक्तं, अन्ये त्वाहुः—यत्र व्रतिनस्तिष्ठन्ति न तत्र देवाः पुष्पवृष्टिं कुर्वन्ति१, अन्ये प्राहुः—देवादिसंमर्दादचित्तता तेषां२, अपरे त्वाहुः—भगवदतिशयाद्यत्यादिसंचरणेऽपि न पुष्पजीववधः किन्तु पुष्टिरेवेति ३, **प्रवचनसारोद्धारटीकायां** तु सर्वगीतार्थसम्मतं तृतीयमतमङ्गीकृतमस्तीति १८, अमणुण्णाणं सद्दफरिसरसरूवगंधाणं अवकरिसो भवति अपकर्षः—अभावः १९, मणुण्णाणं सद्दफरिसरसरूवगंधाणं पाउब्भावो भवति प्रादुर्भावः २० पच्चाहरओऽविय णं हिययगमणीओ जोयणणीहारी सरो प्रत्याहरतो—व्याकुर्वतो भगवत इति २१ भगवं च णं अद्धमागधाए भासाए धम्ममाइक्खइ २२ साविय णं अद्धमागधभासा भासिज्जमाणी तेसिं सव्वेसिं आयरियमणारियाणं दुपयचउप्पयपसुपक्खीसरीसिवाणं अप्पप्पणो हियसिवसुहदाइ भासत्ताए परिणमति २३ पुव्वबद्ध-

१ अस्य वृत्तिः—जलस्थलजं भास्वरं प्रभूतं च कुसुमं तेन वृन्तस्थायिना—ऊर्ध्वमुखेन दशार्धवर्णेन जानुना उत्सेधस्य-उच्चयस्य यत् प्रमाणं—तदेव प्रमाणं यस्य स जानूत्सेधप्रमाणमात्रः पुष्पोपचारः—पुष्पप्रकर इत्यष्टादशः. अत्र केचिदाहुः—यत्र व्रतिन० इत्यपि

वेराविय णं देवासुरणागसुवन्नजक्खरक्खसकिन्नरकिंपुरिसगरुलगंधव्वमहोरगा अरहओ पायमूले पसंतचित्तमाणसा धम्मं निसामंति २४ अण्णउत्थियपावयणीविय णं आगया वंदंति २५ आगया समाणा अरहओ पायमूले निप्पडिवयणा भवंति २६ जओ जओविय णं अरहंता भगवंतो विहरंति तओ तओविय णं जोयणपणवीसाएणं ईती ण भवति २७ मारी न भवति २८ सचक्कं न भवति २९ परचक्कं न भवति ३० अइवुट्ठी न भवति ३१ अणावुट्ठी न भवति ३२ दुभिक्खं न भवति ३३ पुव्वुप्पण्णाविय णं उप्पातिया वाही खिप्पामेव उवसमंति ३४। अत्र च 'पच्चाहरउ' इत आरभ्य १४येऽभिहितास्ते प्रभामण्डलं च कर्मक्षयकृता अतिशेषाः, शेषा भवप्रत्ययेभ्योऽन्ये देवकृता इति। ननु प्राकाराम्बुरुहाद्यतिशया देवकृता अपि चतुस्त्रिंशद्बहिः कथम्?, उच्यते, चतुस्त्रिंशत् किल नियता अन्ये त्वनियता इति, इदं च किल न स्वबुद्ध्या प्रोच्यते, यदुक्तं श्रीजिनभद्रक्षमाश्रमणैः विशेषणवत्यां–"होऊण व देवकया चउतीसाइसयबाहिरा कीस?। पागारंबुरुहाई अणण्णसरिसावि लोगम्मि॥१॥ चोत्तीसं किर णियया ते गहिया सेसया अणिययत्ति। सुत्तंमि ण संगहिया जह लद्धीओ विसेसाओ॥२॥" इति, तथा ननु यत्र तीर्थकरा विहरन्ति तत्र देशे पञ्चविंशतियोजनानामादेशान्तरेण द्वादशानां मध्ये तीर्थकरातिशयात् न वैरादयोऽनर्था भवन्तीत्यत्रोक्तं तत्कथं श्रीमन्महावीरे भगवति पुरिमताले नगरे व्यवस्थित एवाभग्नसेनस्य विपाकश्रुताङ्गवर्णितो व्यतिकरः सम्पन्न इति?, अत्रोच्यते, सर्वमिदमर्थानर्थजातं प्राणिनां स्वकृतकर्म्मणः सकाशादुपजायते, कर्म तु द्वेधा–सोपक्रमं निरुपक्रमं च, तत्र यानि वैरादीनि सोपक्रमकर्मसम्पाद्यानि तान्येव तीर्थकरातिशयादुपशाम्यन्ति, सदोषधात् साध्यव्याधिवत्, यानि तु निरुपक्रमकर्मसम्पाद्यानि तानि अवश्यं विपाकतो वेद्यानि नोपक्रमकरणविषयानि,



असाध्यव्याधिवत्, अत एव सर्वातिशयसम्पत्समन्वितानां जिनानामप्यनुपशान्तवैरभावा गोशालकादय उपसर्गान् विहितवन्त इति। महांश्चासौ वीरश्च–कर्मविदारणसहिष्णुर्महावीरस्तम्, 'वुच्छं'ति वक्ष्ये–भणिष्यामि प्रकीर्णकं–श्रीवीरहस्तदीक्षितमुनिविरचितं नन्दीसूत्रोक्तग्रन्थविशेषमिदं–प्रत्यक्षं तन्दुलानां वर्षशतायुष्कपुरुषप्रतिदिनभोग्यानां सङ्ख्याविचारेणोपलक्षितं तन्दुलवैचारिकं नामेति॥ १॥ मङ्गलाचरणमभिधेयं च प्रतिपाद्यात्र द्वारगाथाद्वयमाह—

सुणह गणिए दह दसा वाससयाउस्स जह विभज्जंति। संकलिए वोगसिए जं चाउं सेसयं होइ॥ २॥
जत्तियमित्ते दिवसे जत्तियराईमुहुत्तमुस्सासे। गब्भंमि वसइ जीवो आहारविहिं च वुच्छामि॥ ३॥

'सुणह० जत्तिय०' अत्र पदानां सम्बन्धोऽयं– वर्षशतायुषो जन्तोर्यथा दश दशा-दशावस्थाः 'विभज्जन्ती'ति पृथग्भवन्ति तथा यूयं श्रृणुत, क्व सति?–गणिते–एकद्व्यादीति क्रियमाणे सति, तथा दशदशा सङ्कलिते–एकत्रमीलिते तथा व्युत्कर्षिते–निष्कासिते सति 'वाससयं परमाउं इत्तो पन्नासं हरइ निद्दाए' इत्यादिना यच्चायुःशेषकं भवति तदपि यूयं श्रृणुत॥ २॥ यावन्मात्रान् दिवसान् यावद्रात्रीर्यावन्मुहूर्त्तान् यावदुच्छ्वासान् जीवो गर्भे वसति तान् वक्ष्ये, गर्भादिके आहारविधिं चशब्दाच्छरीररोमादिस्वरूपं च वक्ष्ये–भणिष्यामीति॥ ३॥ तत्र गर्भे अहोरात्राणां प्रमाणमाह—

दुन्नि अहोरत्तसए संपुण्णे सत्तसत्तरिं चेव। गब्भंमि वसइ जीवो अद्धमहोरत्तमण्णं च॥ ४॥
एए तु अहोरत्ता नियमा जीवस्स गब्भवासंमि। हीणाहिया उ इत्तो उवघायवसेण जायंति॥५॥

---

१ कमिदं अनन्तरमेव वक्ष्यमाणं तन्दुलानामित्यादि इत्यपि २ सामान्येन मङ्गलमभिधेयं चाभिधाय विशेषतोऽभिधेयप्रतिपादनायेत्यपि

अट्ठ सहस्सा तिन्नि उ सया मुहुत्ताण पन्नवीसा य । गब्भगओ वसइ जीओ नियमा हीणाहिया इत्तो ॥ ६ ॥
तिन्नेव य कोडीओ चउदस य हवंति सयसहस्साइं । दस चेव सहस्साइं दुन्नि सया पण्णवीसा य ॥ ७ ॥
उस्सासा निस्सासा इत्तियमित्ता हवंति संकलिया। जीवस्स गब्भवासे नियमा हीणाहिया इत्तो ॥ ८ ॥

"दुन्नि" द्वे अहोरात्रशते ( २०० ) सम्पूर्णे सप्तसप्तत्यधिके ( ७७ ) अन्यदर्धमहोरात्रं च जीवो गर्भे वसति–तिष्ठति, एतावता नव मासान् सार्धसप्तदिनांश्च जीवो गर्भे तिष्ठतीत्यर्थः ॥४॥ "एए तु" एते–उक्तरूपा अहोरात्रा निश्चयेन जीवस्य गर्भवासे भवन्ति 'इत्तो'त्ति अस्मादुक्तादहोरात्रप्रमाणात् उपघातवशेन–वातपित्तादिदोषेण हीनाधिका अपि 'जायंति'त्ति धातूनामनेकार्थत्वात् भवन्तीत्यर्थः, तु शब्दोऽप्यर्थः स च योजित इति ॥ ५ ॥ अथ गर्भे मुहूर्त्तानां प्रमाणमाह—"अट्ठ सहस्सा" अष्टौ सहस्राणि त्रीणि शतानि पञ्चविंशत्यधिकानि मुहूर्त्तानि ( ८३२५ ) निश्चयेन जीवो गर्भे वसति, तानि च कथं भवन्ति?, उक्तलक्षणाः सप्तसप्तत्यधिकद्विशताहोरात्राः (२७७) त्रिंशता गुणिताः ( ८३१० ) एतावन्तो भवन्ति, अर्द्धाहोरात्रस्य च पञ्चदश मुहूर्त्तानि क्षिप्यन्ते जातानि ( ८३२५ ) इति, इतः–उक्तरूपात् (८३२५) वातदोषादिकारणेन हीनाधिकान्यपि मुहूर्त्तानि वसति गर्भे जीव इति ॥ ६ ॥ अथ गाथाद्वयेन गर्भे निःश्वासोच्छ्वासप्रमाणमाह—"तिन्नेव०" "उस्सास" तिस्रः कोटयः चतुर्दश शतसहस्राणि–चतुर्दश लक्षाणीत्यर्थः दश सहस्राणि द्वे शते पञ्चविंशत्यधिके इति ( ३१४१०२२५ ) 'इत्तियमित्ता' इति एतावन्मात्राः सङ्कलिताः–एकीकृताः जीवस्य गर्भवासे निश्चयेन निःश्वासोच्छ्वासा भवन्ति, कथं ?, एकस्मिन्नन्तमु(न्मु)हूर्त्ते सप्तत्रिंशच्छतानि त्रिसप्तत्यधिकानि ( ३७७३ ) निःश्वासोच्छ्वासा भवन्ति, एतैश्च पदैः तानि (८३२५) उक्तरूपाणि मुहूर्त्तानि गुण्यन्ते तदा यथोक्तं (३१४१०२२५) एतद् भवतीति, इतः–उक्तरूपात् वातादिकारणेन हीनाधिका निःश्वासोच्छ्वासा भवन्तीति ॥७—८॥ अथाहाराधिकारे किञ्चिद्गर्भादिस्वरूपमाह—

आउसो !-इत्थीए नाभिहिट्ठा सिरादुगं पुप्फनालियागारं। तस्स य हिट्ठा जोणी अहोमुहा संठिया कोसा ॥ ९ ॥
तस्स य हिट्ठा चूयस्स मंजरी [जारिसी] तारिसा उ मंससस । ते रिउकाले फुडिया सोणियलवया विमोयंति १०
कोसायारं जोणिं संपत्ता सुक्कमीसिया जइया । तइया जीवुववाए जुग्गा भणिआ जिणिंदेहिं ॥ ११ ॥

"आउसो ! इत्थी०" हे आयुष्मन् !–हे गौतम ! स्त्रियाः–नार्याः नाभेरधः–अधोभागे पुष्पनालिकाकारं–सुमनोवृन्तसदृशं शिराद्विकं–धमनियुग्मं वर्त्तते, च पुनस्तस्य–शिराद्विकस्याधो योनिः–स्मरकूपिका संस्थिता अस्ति, किंभूता ?-अधोमुखा, पुनः किंभूता ?–'कोस'त्ति कोशा–खड्गपिधानकाकारेत्यर्थः ॥९॥ "तस्स य०" तस्याश्च योनेरधः–अधोभागे'चूतस्य'आम्रस्य यादृश्यो मञ्जर्यो–वल्लरयो भवन्ति तादृश्यो मांसस्य–पललस्य मञ्जरयो भवन्ति, ता मञ्जरयः स्त्रीणां मासान्ते यदजस्रमिश्रं दिनत्रयं श्रवति तदृतुकालः–स्त्रीधर्मप्रस्तावस्तस्मिन् स्फुटिताः–प्रफुल्लाः सत्यः शोणितलवकान्–रुधिरबिन्दून् विमुञ्चन्ति–श्रवन्ति ॥१०॥ "कोसा०"ते रुधिरबिन्दवः कोशाकारां योनिं सम्प्राप्ताः सन्तः शुक्रमिश्रिताः–ऋतुदिनत्रयान्ते पुरुषसंयोगेन अपुरुषसंयोगेन वा पुरुषवीर्येण मिलिताः 'जइय'त्ति यदा भवन्ति 'तइय'त्ति तदा जीवोत्पादे–गर्भसम्भूतिलक्षणे योग्या भणिता-कथिता जिनेन्द्रैः-सर्वज्ञैरिति।ननु कथं पुरुषासंयोगे पुरुषवीर्यसम्भव इति?,अत्रोच्यते,स्थानाङ्गाभिप्रायेण यथा-"पंचहिं ठाणेहिमित्थी पुरिसेण सद्धिं असंवसमाणीवि गब्भं धरेज्जा,तं०–इत्थी दुव्वियडा दुन्निसन्ना सुक्कपोग्गले अधिट्ठिज्जा १सुक्क-

द्वारनिर्देशः २–३ अहोरात्रमुहूर्त्तोच्छ्वासमानं ४–८

॥ ३ ॥

प्पोग्गलसंसट्ठे व से वत्थे अंतो जोणीए अणुपवेसेज्जा२सयं व से सुक्कपोग्गले अणुपवेसेज्जा३परो व से सुक्कपोग्गले अणुपवेसेज्जा ४ सीओदगवियडेण वा से आयममाणीए सुक्कपोग्गले अणुपवेसेज्जा५इच्चेतेहिं पंचजावधरेज्जा' दु०परिधानवर्जितेत्यर्थः, दुर्न्निषण्णा पुरुषशुक्रपुद्गलान् कथञ्चित् पुरुषनिसृष्टान् आसनस्थानधितिष्ठेत्–योन्याकर्षणेन सङ्गृह्णीयात् ( १ ) तथा शुक्रपुद्गलसंसृष्टं 'से'तस्याः स्त्रिया वस्त्रमन्तः–मध्ये योनावनुप्रविशेद्, इह च वस्त्रमित्युपलक्षणं तथाविधमन्यदपि अनुप्रविशेदिति २ स्वयमिति पुत्रार्थिनीत्वाच्छीलरक्षकत्वाच्च 'से'त्ति सा शुक्रपुद्गलान् योनावनुप्रवेशयेत् ३ परो वत्ति श्वश्रूप्रभृतिकः पुत्रार्थमेव 'से' तस्या योनाविति ४ शीतोदकलक्षणं यद् विकटं पल्वलादिगतमित्यर्थः तेन वा 'से' तस्याः आचमन्त्याः पूर्वपतिता–उदकमध्यवर्त्तिनः शुक्रपुद्गलाः अनुप्रविशेयुरिति ५ ॥ ११ ॥

अथाध्वस्तध्वस्तयोनिकालमानं जीवसङ्ख्यापरिमाणं चाह—

**बारस चेव मुहुत्ता उवरिं विद्धंस गच्छई सा उ । जीवाणं परिसंखा लक्खपिहुत्तं च उक्कोसं ॥ १२ ॥**
**पणपन्नाय परेणं जोणी पमिलायए महिलियाणं । पणसत्तरिइ परओ पाएण पुमं भवेऽबीओ ॥ १३ ॥**

"बारस०" सा पुरुषवीर्यसंयुक्ता योनिर्द्वादशैव मुहूर्त्तान् यावदध्वस्ता भवति, तथा 'उवरि'न्ति द्वादशमुहूर्त्तानन्तरं सा योनिर्विध्वंसं गच्छति प्राप्नोतीत्यर्थः, अयमाशयः—ऋत्वन्ते स्त्रीणां नरोपभोगेन द्वादशमुहूर्त्तमध्य एव गर्भभावः, तदनन्तरं वीर्यविनाशात् गर्भाभाव इति, तथा मनुष्यगर्भे जीवानां–गर्भजजन्तूनां परिसङ्ख्या–मानं लक्षपृथक्त्वमुत्कृष्टतो भवति, सिद्धान्तभाषया पृथक्त्वं द्विप्रभृतिरा नवभ्यः सङ्ख्या कथ्यते इति ॥ १२ ॥ अथ



कियद्भ्यो वर्षेभ्यः पुनरूर्ध्वं गर्भं स्त्रियो न धारयन्ति पुमांश्चाबीजो भवति इति प्रसङ्गतो निरूपयितुमाह— "पणप०" महिलानां–स्त्रीणां प्रायः प्रवाहेण 'पणपन्नाय'त्ति पञ्चपञ्चाशद्वर्षेभ्यः 'परेणं'ति ऊर्ध्वं योनिः प्रम्लायति–गर्भधारणसमर्था न भवतीत्यर्थः, भावार्थोऽयं निशीथोक्तः–यथा "इत्थीए जाव पणपन्ना वासा न पूरंति ताव अमिलाया जोणी–आर्त्तवं स्यात् गर्भं च गृह्णातीत्यर्थः 'पणपन्नवासाए पुण कस्सवि आर्तवं भवति न पुण गब्भं गिण्हइ, पणपन्नाए परओ नो अत्तवं नो गब्भं गिण्हइ" इति, तथा चोक्तं स्थानाङ्गटीकायाम्–"मासि मासि रजः स्त्रीणामजस्रं श्रवति त्र्यहम् । वत्सरात् द्वादशादूर्ध्वं, याति पञ्चाशतः क्षयम् ॥ १ ॥ पूर्णषोडशवर्षा स्त्री, पूर्णविंशेन संगता । शुद्धे गर्भाशये१, मार्गे २, रक्ते ३ शुक्रे ४ ऽनिले ५ हृदि ६ ॥ २ ॥ वीर्यवन्तं सुतं सूते, ततो न्यूनाब्दयोः पुनः । रोग्यल्पायुरधन्यो वा, गर्भो भवति नैव वा ॥३॥" इति । शुद्धे–निर्दोषे गर्भाशयादिषट्के इत्यर्थः । तथा च "ऋतुस्तु द्वादश निशाः, पूर्वास्तिस्रोऽत्र निन्दिताः । एकादशी च युग्मासु, स्यात्पुत्रोऽन्यासु कन्यका ॥ ४ ॥ पद्मं सङ्कोचमायाति, दिनेऽतीते तथा यथा । ऋतावतीते योनिः सा, शुक्रं नैव प्रतीच्छति ॥५॥ मासेनोपचितं रक्तं, धमनीभ्यामृतौ पुनः । ईषत् कृष्णं विगन्धं च, वायुर्योनिमुखात्तुदेत् ॥ ६ ॥" तथा चाविध्वस्ता योनिरविध्वस्तं बीजं १ अविध्वस्ता योनिर्विध्वस्तं बीजं २ विध्वस्ता योनिरविध्वस्तं बीजं ३ विध्वस्ता योनिर्विध्वस्तं बीजं ४चतुर्षु भङ्गेषु आद्ये भङ्ग एवोत्पत्तेरवकाशः, न शेषेषु त्रिष्विति, तत्र पञ्चपञ्चाशिका नारी विध्वस्तयोनिः, सप्तसप्ततिकः पुमानिति, "द्वादश मुहूर्त्तान् यावद् बीजं न विध्वस्तं स्यात्तत ऊर्ध्वं

विध्वस्त'' मिति द्वितीयाङ्गवृत्ताविति । तथा पुमान्–पुरुषः प्रायः पञ्चसप्ततिवर्षेभ्यः परत ऊर्ध्वमबीजो भवेत्, गर्भाधानयोग्यबीजविवर्जित इत्यर्थः ॥ १३ ॥ कियत्प्रमाणायुषामेतन्मानं द्रष्टव्यमित्याह—



**वाससयाउयमेयं परेण जा होइ पुव्वकोडीओ । तस्सद्धे अमिलाया सव्वाउयवीसभागो य ॥ १४ ॥**

"वास"० वर्षशतायुषामिदंयुगीनानामेतद् गर्भधारणादिकालमानमुक्तं, परेण तर्हि का वार्त्तेत्याह–'परे०' वर्षशतात् परतो वर्षद्वयं त्रयं चतुष्टयं चेत्यादि यावन्महाविदेहमनुष्याणां या पूर्वकोटिः सर्वायुषि स्यात् तस्य–सर्वायुषोऽर्धे तदर्धं यावदम्लाना–गर्भधारणयोग्या स्त्रीणां योनिः द्रष्टव्या, ततोऽपि परतः सकृत्प्रसवधर्माणोऽम्लानयोनयोऽवस्थितयौवनत्वात्, पुंसां पुनः सर्वस्यापि पूर्वकोटिपर्यन्तस्यायुषोऽन्त्यो विंशतिमो भागोऽबीज इति ॥ १४ ॥

अथ कियन्तः पुनर्जीवाः एकस्याः स्त्रियाः गर्भे एकहेलयैवोत्पद्यन्ते, कियतां च पितॄणां एकः पुत्रो भवति इत्याह–

**रत्तुक्कडा उ इत्थी लक्खपुहुत्तं च बारसमुहुत्ता । पिअसंख सयपुहुत्तं बारसवासा उ गब्भस्स ॥ १५ ॥**

"रत्तु०" अत्रान्यत्राप्यार्षत्वाद् विभक्तीनां वैचित्र्यं ज्ञातव्यमिति, मासान्ते त्रीणि दिनानि यावत् स्त्रीणां यन्निरन्तरमजश्रं श्रवति तदत्र रक्तमुच्येत, तेन रक्तेन–रुधिरेण उत्कटायाः पुरुषवीर्ययुक्तयोन्याश्च एकस्याः स्त्रियाः गर्भे जघन्यतः एको द्वौ वा त्रयो वा उत्कृष्टतस्तु 'लक्खपुहुत्तं'ति लक्षपृथक्त्वं नवलक्षगर्भजजीवा उत्पद्यन्ते इत्यर्थः, निष्पत्तिं च प्रायः एको द्वौ वाऽऽगच्छतः, शेषास्त्वल्पजीवितत्वात्तत्रैव म्रियन्ते, एको द्वौ वेत्युक्तं व्यवहारापेक्षया निश्चयापेक्षया तु ततोऽधिकं न्यूनं वा भवतीति द्रष्टव्यमिति, चशब्दात् स्त्रियाः संसक्तायां योनौ द्वीन्द्रिया जीवा जघन्यतः एको द्वौ वा त्रयो वोत्कृ-



ष्टतो नवलक्षप्रमाणा उत्पद्यन्ते, तप्तायःशलाकान्यायेन पुरुषसंयोगे तेषां जीवानां विनाशो भवति, स्त्रीपुरुषमैथुने मिथ्यादृष्टयः अन्तर्मुहूर्त्तायुषः अपर्याप्तावस्थाकालकारिणः नवप्राणधारकाः नारकदेवयुगलवर्जितशेषजीवस्थानगमनशीलाः नारकदेवयुगलाग्निवायुवर्जितशेषजीवस्थानागमनस्वभावाः मुहूर्त्तपृथक्त्वकायस्थितिकाः असङ्ख्येयाः संमूर्च्छिममनुष्या उत्पद्यन्ते चेति, तथा 'बारसमुहुत्त'त्ति पुरुषवीर्यस्य कालमानं द्वादश मुहूर्त्तानि,एतावत्कालमेव शुक्रशोणिते अविध्वस्तयोनिके भवत इति, 'पिअ'त्ति पितॄणां पितृसंख्या तस्याः शतपृथक्त्वं भवति, अयमाशयः–उत्कृष्टतो नवानां पितृशतानामेकः पुत्रो जायते, एतदुक्तं भवति–कस्याश्चिद् दृढसंहननायाः कामातुरायाश्च योषितो यदा द्वादशमुहूर्त्तमध्ये उत्कृष्टतो नवभिः पुरुषशतैः सह सङ्गमो भवति तदा तद्बीजे यः पुत्रो भवति स नवानां पितृशतानां पुत्रो भवतीति, उपलक्षणत्वात्तिरश्चां च बीजं द्वादशमुहूर्त्तान् यावद्योनिभूतं भवति, ततश्च गवादीनां शतपृथक्त्वस्यापि बीजं गवादियोनिप्रविष्टं बीजमेव, तत्र च बीजसमुदाये एको जीव उत्पद्यमानस्तेषां सर्वेषां बीजस्वामिनामुत्कर्षतः पुत्रो भवति, मत्स्यादीनामेकसंयोगेऽपि शतसहस्रपृथक्त्वं गर्भे उत्पद्यते निष्पद्यते चेत्येकस्मिन्नपि गर्भे लक्षपृथक्त्वं पुत्राणां स्यादिति । ननु देवानां शुक्रपुद्गलाः किं सन्ति उत न?, उच्यते,सन्त्येव, परं ते वैक्रियशरीरान्तर्गता इति न गर्भाधानहेतव इति,यदुक्तं श्रीप्रज्ञापनायां–"अत्थि णं भंते ! तेसिं देवाणं सुक्कपुग्गला?" हंता अत्थि, ते णं भंते ! तेसिं अच्छराणं कीसत्ताए भुज्जो २ परिणमंति ?, गो० ! सोइंदियत्ताए चक्खिंदियत्ताए घाणिंदियत्ताए रसणिंदियत्ताए फासिंदियत्ताए इट्ठत्ताए कंतत्ताए मणुन्नत्ताए मणामत्ताए सुभगत्ताए सोहग्गरूवजोव्वणगुणलावन्नत्ताए एयासिं भुज्जो २ परिणमंति जाव तत्थ णं जे ते मणपरियारगा

देवा तेसिं इच्छामणे समुप्पज्जइ इच्छामो णं अच्छराहिं सद्धिं मणपरियारणं करेत्तए, तओ णं तेहिं देवेहिं मणसीकए समाणे खिप्पामेव ताओ अच्छराओ तत्थगयाओ चेव समाणीओ अणुत्तराइं उच्चावयाइं मणाइं पहारेमाणीओ२चिट्ठंति,तओ णं ते देवा ताहिं अच्छराहिं सद्धिं मणपरियारणं करेंति सेसं निरवसेसं तं चेव जाव भुज्जो २ परिणमंति'त्ति ॥ अथ कियन्तं कालं भवस्थित्या जीवो गर्भे वसतीत्याह—"बारस०" गर्भस्य स्थितिः द्वादशवर्षप्रमाणा भवति, एतदुक्तं भवति–कोऽपि पापकारी वातपित्तादिदूषिते देवादिस्तम्भिते वा गर्भे द्वादश संवत्सराणि निरंतरं तिष्ठति उत्कृष्टतः, जघन्यतस्त्वन्तर्मुहूर्तमेव तिष्ठति, भवस्थित्या गर्भाऽधिकारात् 'उदगगब्भे णं भंते! कालओ केवचिरं होइ ?, गो०! जहण्णेणं एक्कं समयं उक्कोसेणं छ मासा" उदकगर्भः–कालान्तरे वृष्टिहेतुपुद्गलपरिणामः तस्य समयानन्तरं षण्मासानन्तरं च वर्षणात्, अयं च मार्गशीर्षादिषु वैशाखान्तेषु सन्ध्यारागादिलिङ्गो भवतीति, तुशब्दात् मनुष्यतिरश्चां कायस्थितिः चतुर्विंशतिवर्षप्रमाणा अवगन्तव्या, यथा कोऽपि स्त्रीकाये द्वादश वर्षाणि जीवित्वा तदन्ते च मृत्वा तथाविधकर्मवशात् तत्रैव गर्भस्थिते कलेवरे समुत्पद्य पुनः द्वादश वर्षाणि जीवतीत्येवं चतुर्विंशतिर्वर्षाण्युत्कर्षतो गर्भे जन्तुरवतिष्ठते, केचिदाहुः–द्वादश वर्षाणि स्थित्वा पुनः तत्रैवान्यजीवस्तच्छरीरे उत्पद्यते तावत्स्थितिरिति ॥ १५ ॥ अथ कुक्षौ पुरुषादयः कुत्र परिवसन्तीत्याह—

**दाहिणकुच्छी पुरिसस्स होइ वामा उ इत्थीयाए य । उभयंतरं नपुंसे तिरिए अट्ठेव वरिसाइं ॥ १६ ॥**

'दाहिणे'ति पुरुषस्य दक्षिणकुक्षिः स्यात्, दक्षिणकुक्षौ वसन् जीवः पुरुषः स्यादिति भावः १, स्त्रिया वामकुक्षिः स्यात्, वामकुक्षौ वसन् जीवः स्त्री भवतीति भावः २, नपुंसकः उभयान्तरं स्यात्, कुक्षिमध्यभागे वसन् जीवो नपुंसको जायते



इति भावः ३, स्त्रीपुरुषनपुंसकलक्षणानि यथा–"योनिर्मृदुत्वमस्थैर्य, मुग्धता चलता स्तनौ । पुंस्कामितेति लिङ्गानि, सप्त स्त्रीत्वे प्रचक्षते ॥ १ ॥ मेहनं खरता दार्ढ्यं, शौण्डीर्यं श्मश्रु धृष्टता । स्त्रीकामितेति लिङ्गानि, सप्त पुंस्त्वे प्रचक्षते ॥ २ ॥ स्तनादिश्मश्रुकेशादिभावाभावसमन्वितम् । नपुंसकं बुधाः प्राहुर्मोहानलसुदीपितम् ॥ ३ ॥" इति ॥ अथ तिरश्चां गर्भे भवस्थितिमाह–'तिरिए'त्ति तिरश्चां गर्भस्थितिरुत्कृष्टतः अष्टौ वर्षाणि, ततः परं विपत्तिः प्रसवो वेति, जघन्यतः अन्तर्मुहूर्त्तमाना भवस्थितिरिति ॥ १६ ॥ अथ जीवो गर्भे उत्पद्यमानः किमाहारमाहारयति ततश्च किंस्वरूपो भवतीत्याह—

**इमो खलु जीवो अम्मापिउसंयोगे माउउयं पिउसुक्कं तं तदुभयसंसट्ठं कलुसं किब्बिसं तप्पढमयाए आहारं आहारित्ता गब्भत्ताए वक्कमइ ( सूत्रं १ ) 'सत्ताहं कललं होइ, सत्ताहं होइ अब्बुयं । अब्बुया जायए पेसी, पेसीओ य घणं भवे ॥ १ ॥ ( १७ ) तो पढमे मासे करिसूणं पलं जायइ १ बीए मासे पेसी संजायए घणा २ तइए मासे माउए दोहलं जणइ ३ चउत्थे मासे माउए अंगाइं पीणेइ ४ पंचमे मासे पंच पिंडियाओ पाणिं पायं सिरं चेव निव्वत्तेइ ५ छट्ठे मासे पित्तसोणियं उवचिणेइ ६ सत्तमे मासे सत्त सिरासयाइं ७०० पंच पेसीसयाइं ५०० नवधमणीओ नवनउइं च रोमकूवसयसहस्साइं निवत्तेइ ९९००००० विणा केसमंसुणा सह केसमंसुणा अद्धुट्ठाओ रोमकूवकोडीओ निव्वत्तेइ ३५०००००००, अट्ठमे मासे वित्तीकप्पो हवइ ८ ( सूत्रं २ )**

'इमो खलु'त्ति यावत् 'वक्कमइ'त्ति मुत्कलं, अयं जीवः खलु इति निश्चितं मातापित्रोः संयोगे 'माउउयं'ति मातुरोजो-जनन्या आर्त्तवं शोणितमित्यर्थः 'पिउसुक्कंति' पितुः शुक्रं, इह यदिति शेषः 'तं' ति तदाहारं तस्य-गर्भव्युत्क-

मणस्य प्रथमता तत्प्रथमता तया 'आहारित्त'त्ति तैजसकार्मणशरीराभ्यां भुक्त्वा गर्भतया-गर्भत्वेन 'वक्कमइ'त्ति व्युत्क्रामति उत्पद्यत इत्यर्थः, किंभूतमाहारं ?—'तदुभयसंसिट्ठं'ति तयोः-शुक्रशोणितयोरुभयं तच्च तत् संसृष्टं च-मिलितं च तदुभयसंसृष्टं, कलुषं-मलिनं 'किब्बिसं'ति कर्बुरमिति, ततः केन क्रमेण शरीरं निष्पाद्यते इत्याह-'सत्ताह'-मित्यादि० यावद् भवेत्तिपद्यं, सप्ताहोरात्राणि यावत् शुक्रशोणितसमुदायमात्रं कललं भवति १ ततः सप्ताहोरात्राणि अर्बुदो भवति, ते एव शुक्रशोणिते किञ्चित् स्त्यानीभूतत्वं प्रतिपद्येते इति २ ततोऽपि चार्बुदात् पेसी-मांसखण्डरूपा भवति ३ ततश्चानन्तरं सा घनं-समचतुरस्रं मांसखण्डं भवति ॥ १७ ॥ 'तो पढमे०' ततः-इह च तच्छुक्रशोणितमुत्तरोत्तरपरिणाममासादयत् प्रथमे मासे कर्षोनं पलं जायते, पञ्चगुञ्जाभिर्माषः षोडशभिर्माषैः कर्षः चतुर्भिः कर्षैः पलमिति वचनात् त्रयः कर्षाः स्युरिति भावः १ द्वितीये तु मासे मांसपेसी घना-घनस्वरूपा भवति, समचतुरस्रं मांसखण्डं जायत इत्यर्थः २ तृतीये मासे तु मातुर्दोहदं जनयतीत्यर्थः ३ चतुर्थे मासे मातुरङ्गानि प्रीणयति-पुष्टानि करोतीत्यर्थः ४ पञ्चमे मासे पाणिद्वयपादद्वयमस्तकरूपाः पञ्च पिण्डिकाः-पञ्चाङ्कुरान् निर्वर्त्तयति निष्पादयतीत्यर्थः ५ षष्ठे मासे पीयते जलमनेनेति पित्तं पित्तं च शोणितं च पित्तशोणितं तत् उपचिनोति-पुष्टं करोतीत्यर्थः ६ सप्तमे मासे सप्त शिराशतानि ७०० पञ्च पेशीशतानि ५०० नव धमन्यो-नव नाड्यः ९ नवनवतिं रोमकूपशतसहस्राणि निर्वर्त्तयति, रोम्णां-तनुरुहाणां कूपा इव कूपा रोमकूपा रोमरन्ध्राणीत्यर्थः तेषां नवनवतिलक्षा इति केशश्मश्रुभिर्विना, तत्र केशाः-शिरोजाः श्मश्रूणि-कूर्चकेशाः ९९०००००, केशश्मश्रुभिः सह 'अद्धुट्ठाउ'त्ति सार्धाः तिस्रो रोमकूपकोटीः निर्वर्तयतीति ३५००००००,



अष्टमे मासे तु शरीरमाश्रित्य 'वित्तीकप्पे' त्ति निष्पन्नप्रायो जीवो भवतीति ८ ॥ अत्राधिकारे इन्द्रभूतिः जनोपकाराय त्रैशलेयं सर्वज्ञं सर्वभूतदयैकरसं प्रश्नयति यथा—

जीवस्स णं भंते ! गब्भगयस्स समाणस्स अत्थि उच्चारेइ वा पासवणेइ वा खेलेइ वा सिंघाणेइ वा वंतेइ वा पित्तेइ वा सुक्केइ वा सोणिएइ वा ?, नो इणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चइ जीवस्स णं गब्भगयस्स समाणस्स नत्थि उच्चारेइ वा जाव सोणिएइ वा ?, गोयमा ! जीवे णं गब्भगए समाणे जं आहारं आहारेइ तं चिणाइ सोइंदियत्ताए १ चक्खुरिंदियत्ताए २ घाणिंदियत्ताए ३ जिब्भिंदियत्ताए ४ फासिंदियत्ताए ५ अट्ठिअट्ठिमिंजकेसमंसुरोमनहत्ताए, से एएणं अट्ठेणं गोयमा ! एवं वुच्चइ जीवस्स णं गब्भगयस्स समाणस्स नत्थि उच्चारेइ वा जाव सोणिएइ वा ( सूत्रं ३ )

'जीवस्स णं भंते !' इत्यादि, हे भदन्त ! जीवस्य-जन्तोः 'णं' वाक्यालङ्कारे गर्भगतस्य-गर्भत्वं प्राप्तस्य 'समाणस्स'त्ति सतः अस्ति-विद्यते वर्त्तत इत्यर्थः उच्चारो-विष्ठा 'इ' इति उपप्रदर्शने अलङ्कारे पूरणे वा वेति विकल्पार्थे 'प्रश्रवणं' मूत्रं 'खेलो' निष्ठीवनं 'सिंघाणे'ति नासिकाश्लेष्म 'वंतं' वमनं 'पित्तं' मायुः शुक्रं-वीर्यं शोणितं-रुधिरं 'सुक्के इ वा सोणिए इ वा' इति पदद्वयं भगवत्यादिसूत्रे न दृश्यते आगमज्ञैर्विचार्यमिति, 'नो इणट्ठे समट्ठे' नो-नैव 'इणट्ठे'त्ति अयमनन्तरोक्तत्वेन प्रत्यक्षोऽर्थो-भावः समर्थो-बलवान्, वक्ष्यमाणदूषणमुद्गरप्रहारजर्जरितत्वात्, गौतमस्वामी प्राह— 'से केणट्ठेणं'ति अथ केन कारणेन इत्यर्थः हे भदन्त ! एवं प्रोच्यते-जीवस्य गर्भगतस्य सतो नास्ति उच्चारो याव-

च्छोणितमिति ?, भगवान् प्राह—हे गौतम ! जीवः णं वाक्यालङ्कारे गर्भगतः सन् यदाहारमाहारयति तदाहारं श्रोत्रेन्द्रियतया १ चक्षुरिन्द्रियतया २ घ्राणेन्द्रियतया ३ जिह्वेन्द्रियतया ४ स्पर्शनेन्द्रियतया ५ चिनोति पुष्टिभावं नयतीत्यर्थः, इन्द्रियाणि द्वैधानि—पुद्गलरूपाणि द्रव्येन्द्रियाणि १ लब्ध्युपयोगरूपाणि तु भावेन्द्रियाणि २, पुनर्निर्वृत्त्युपकरणलक्षणभेदात् द्वैधानि द्रव्येन्द्रियाणि, तत्र निर्वृत्तिर्द्विधा—अन्तो १ बहिश्च २, तत्र अन्तः—श्रोत्रेन्द्रियस्य अन्तः—मध्ये नेत्रगोचरातीता केवलिदृष्टा कदम्बकुसुमाकारा देहावयवरूपा काचिन्निर्वृत्तिरस्ति या शब्दग्रहणोपकारे वर्त्तते १ चक्षुरिन्द्रियस्यान्तः—मध्ये केवलिगम्या धान्यमसूराकारा देहावयवरूपा काचिन्निर्वृत्तिरस्ति या रूपग्रहणोपकारे वर्त्तते २ घ्राणेन्द्रियस्य अन्तः—मध्ये केवलिदृश्या अतिमुक्तककुसुमाकारा देहावयवरूपा काचिन्निर्वृत्तिरस्ति या गन्धग्रहणोपकारे वर्त्तते ३ रसनेन्द्रियस्य अन्तः—मध्ये जिनगम्या क्षुरप्राकारा देहावयवरूपा काचिन्निर्वृत्तिरस्ति या रसग्रहणोपकारे वर्त्तते ४ स्पर्शनेन्द्रियस्य अन्तः—मध्ये केवलिदृष्टा देहाकारा काचिन्निर्वृत्तिरस्ति या स्पर्शग्रहणोपकारे वर्त्तते ५—१ बहिर्निर्वृत्तिस्तु या सर्वेषामपि श्रोत्रादीनां कर्णशष्कुलिकादिका दृश्यते सैव मन्तव्या २, उपकरणेन्द्रियं तु तेषामेव कदम्बगोलकाकारादीनां खड्गस्य छेदनशक्तिरिव ज्वलनस्य दहनशक्तिरिव वा या स्वकीय२विषयग्रहणशक्तिस्तत्स्वरूपं द्रष्टव्यम् २, तथा ज्ञानावरणकर्मक्षयोपशमाज्जीवस्य शब्दादिग्रहणशक्तिरूपं लब्धिभावेन्द्रियं १ यत्तु शब्दादीनामेव ग्रहणपरिणामलक्षणं तदुपयोगभावेन्द्रियमिति २, तत्र यानि द्रव्येन्द्रियाणि तानि जीवानामिन्द्रियपर्याप्तौ सत्यां भवन्ति, यानि च भावेन्द्रियाणि तानि संसारिणां सर्वावस्थाभावीनीति, तथा नयनस्य विषयोऽप्रकाशकवस्तु पर्वताद्याश्रित्यात्माङ्गुलेन सातिरेकं योजनलक्षं स्यात्, प्रकाशके त्वादित्यचन्द्रादावधिकमपि विषयपरिमाणं स्यात्, नात्र विषये नियमः कोऽपि निर्दिष्टोऽस्ति सिद्धान्ते, यतः पुष्करवरद्वीपार्द्धे मानुषोत्तरपर्वतसमीपे कर्कसङ्क्रान्तौ मनुष्याः प्रमाणाङ्गुलभवैः सातिरेकैरेकविंशतियोजनलक्षैः व्यवस्थितं रविं पश्यन्तः प्रोच्यन्ते शास्त्रान्तरे इति, जघन्यतस्त्वत्यासन्नरजोमलादेरग्रहणादङ्गुलसङ्ख्येयभागात् परतः स्थितं वस्तु चक्षुषो विषयः १ श्रोत्रस्य द्वादश योजनान्युत्कृष्टविषयो मेघगर्जितादौ २ घ्राणरसनस्पर्शनानां तूत्कृष्टं नव योजनानि ३–४–५ जघन्यतस्तु चतुर्णामप्यङ्गुलासङ्ख्येयभागादागतं गन्धादिकं विषयः, मनसस्तु केवलज्ञानस्येव समस्तमूर्त्तामूर्त्तवस्तुविषयत्वेन क्षेत्रतो नास्ति विषयप्रमाणं मनसोऽप्राप्यकारित्वादिति, विषयप्रमाणं चात्र इन्द्रियविचारे आत्माङ्गुलेनैव ज्ञेयमिति, तथा—'अट्ठिअट्ठिमिंज०'अस्थ्यस्थिमिञ्जकेशश्मश्रुरोमनखतया चिनोतीति, तत्रास्थि—हड्डं अस्थिमिंजा—अस्थिमध्यावयवः केशाः—शिरोजाः श्मश्रूणि—कूर्चकेशाः रोमाणि—कक्षादिकेशा इति,'से' अथ अनेनार्थेन—अनेन कारणेन हे गौतम ! हे इन्द्रभूते ! एवं—पूर्वोक्तं प्रोच्यते—प्रकर्षेण प्रतिपाद्यते जीवस्य गर्भगतस्य सतो नास्ति उच्चारो यावच्छोणितमिति ॥ पुनर्गौतमो ज्ञातनन्दनं प्रश्नयति—

**जीवे णं भंते ! गब्भगए समाणे पहू मुहेणं कावलियं आहारं आहारित्तए ?, गोयमा ! नो इणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुचइ ?—गोयमा ! जीवे णं गब्भगए समाणे नो पहू मुहेणं कावलियं आहारं आहारित्तए ?, गोयमा ! जीवे णं गब्भगए समाणे सवओ आहारेइ सवओ परिणामेइ सवओ ऊससेइ सवओ नीससेइ अभिक्खणं आहारेइ अभिक्खणं परिणामेइ अभिक्खणं ऊससेइ अभि० नीससेइ**

आहच्च आहारेइ आहच्च परिणामेइ आहच्च ऊससेइ आ० नीससइ, माउजीवरसहरणी पुत्तजीवरसहरणी माउजीवपडिबद्धा पुत्तजीवं फुडा तम्हा आहारेइ तम्हा परिणामेइ अवरावि णं पुत्तजीवपडिबद्धा माउजीवफुडा तम्हा चिणाइ, से एएणं अट्ठेणं गोयमा! एवं वुचइ–जीवे णं गब्भगए समाणे नो पहू मुहेणं कावलियं आहारं आहरित्तए। (सूत्रं ४)

'जीवे णं०' हे भदन्त! हे भवान्त! हे दयैकरसकृतवाग्वृष्ट्याद्रींकृतभव्यहृदयवसुंधर! जीवो गर्भगतः सन् प्रभुः–समर्थः मुखेन–वक्त्रेण कवलैर्भवं कावलिकं आहारं–अशनादिकं 'आहारित्तए'त्ति आहर्तुं अदनं कर्तुमिति ?, आह जगदीश्वरः–हे गौतम! नायमर्थः समर्थः, श्रीगौतमः प्राह–'से' अथ केनार्थेन एवं प्रोच्यते ?, विश्वैकवत्सलो वीरः प्राह–हे गौतम! जीवो गर्भगतः सन् 'सव्वउ'त्ति सर्वात्मना–सर्वप्रकारेण आहारयति, आहारतया गृह्णातीत्यर्थः, सर्वात्मना परिणामयति, शरीरादितया गृह्णातीत्यर्थः, सर्वतः–सर्वात्मना 'उच्छ्वसिति' सर्वप्रकारेण ऊर्ध्वश्वासं गृह्णातीत्यर्थः, सर्वतः–सर्वात्मना निःश्वसिति–श्वासमोक्षणं करोतीत्यर्थः, अभीक्ष्णं–पुनः पुनः आहारयति अभीक्ष्णं परिणामयति अभीक्ष्णमुच्छ्वसिति अभीक्ष्णं निःश्वसिति, 'आहच्च'त्ति कदाचिदाहारयति कदाचिन्नाहारयति तथास्वभावत्वात् कदाचित् परिणामयति कदाचिन्न परिणामयति कदाचिदुच्छ्वसिति कदाचिन्नोच्छ्वसिति कदाचिन्निःश्वसिति कदाचिन्न निःश्वसिति अपर्याप्तावस्थायां। अथ कथं सर्वतः आहारयतीत्याह—'माउजीवर'० रसः ह्रियते–आदीयते यया सा रसहरणी नाभिनालमित्यर्थः मातृजीवस्य रसहरणी मातृजीवरसहरणी, किमित्याह–पुत्रजीवरसहरणी, पुत्रस्य रसोपादाने कारणत्वात्,



कथमेवमित्याह–मातृजीवप्रतिबद्धा सती सा यतः पुत्रजीवं 'फुडा' इति पुत्रजीवं स्पृष्टवती, इह प्रतिबद्धता–गाढसम्बन्धस्तदंशत्वात् स्पृष्टता च–सम्बन्धमात्रं अतदंशत्वात्, अथवा मातृजीवरसहरणी १ पुत्रजीवरसहरणी २ चेति द्वे नाड्यौ स्तः, तयोश्चाद्या मातृजीवप्रतिबद्धा पुत्रजीवं स्पृष्टेति, 'तम्हा' इति यस्मादेवं तस्मान्मातृजीवप्रतिबद्धया रसहरण्या पुत्रजीवस्पर्शनात् आहारयति तस्मात् परिणमयति, 'अवरावि य' त्ति पुत्रजीवरसहरण्यपि च पुत्रजीवप्रतिबद्धा सती मातृजीवं स्पृष्टवती, यस्मादेवं तस्माच्चिनोति शरीरं, उक्तञ्च तन्त्रान्तरे–"पुत्रस्य नाभौ मातुश्च, हृदि नाडी निबध्यते। यथाऽसौ पुष्टिमाप्नोति, केदार इव कुल्यया ॥ १ ॥" इति, 'से' अथ अनेनार्थेन हे गौतम! एवं प्रोच्यते–जीवो गर्भगतः सन् न प्रभुः–न समर्थः मुखेन कावलिकं आहारमाहर्त्तुमिति ॥ पुनः गौतमो वीरं प्रश्नयति—

जीवे णं गब्भगए समाणे किमाहारं आहारेइ ?, गोयमा जं से माया नाणाविहाओ नव रसविगइओ तित्तकडुयकसायंबिलमहुराइं दव्वाइं आहारेइ तओ एगदेसेणं ओयमाहारेइ, तस्स फलबिंटसरिसा उप्पलनालोवमा भवइ नाभिरसहरणी जणणीए सया इं नाभीए पडिबद्धा नाभीए तीए गब्भो ओयं आइयइ अण्हयंतीए ओयाए तीए गब्भो विवड्ढइ जाव जाउत्ति (सू० ५)

जीवो गर्भगतः सन् किमाहारमाहारयति ?, गौतम! 'जं से'त्ति या से–तस्य गर्भसत्त्वस्य माता गर्भधारिणी 'नाणा०' नानाविधाः—विविधप्रकाराः रसरूपा रसप्रधाना वा विकृतयो—दुग्धाद्या रसविकारास्ताः आहारयति, तथा यानि तिक्तकटुककषायाम्लमधुराणि द्रव्याणि चाहारयति, तत्र तिक्तानि–निम्बचिर्भटादीनि कटुकानि–आर्द्रकतीमनादीनि

कषायाणि–वल्कादीनि आम्लानि–तक्रारनालादीनि मधुराणि–क्षीरदध्यादीनि ५, 'तओ एगदेसेणं'ति तासां–रसविकृत्यादीनामेकदेशस्तेन सह 'ओयं'ति ओजसं–शुक्रशोणितसमुदायरूपं आहारयति, यद्वा त्वगेकदेशेन मातुराहारमिश्रं ओजः–शोणितं आहारयति । कथमित्याह 'तस्स फल' इत्यादि यावत् 'जाउ'त्ति, तस्य–गर्भजीवस्य 'जणणीए'त्ति जनन्या–मातुः नाभिरसहरणी–नाभिनालमस्ति, किम्भूता ?–फलवृन्तसदृशी–उत्पलनालोपमा च पुनः किंभूता ?–'पडिबद्धा' गाढलग्ना, क्व ?–नाभौ, कथं ?–सदा 'इं' इति वाक्यालङ्कारे 'तीए'त्ति तया 'नाभीए'त्ति जननीनाभिप्रतिबद्धया रसहरण्या 'गब्भो ओयं'ति गर्भः–उदरस्थः जन्तुः ओजः–मातुराहारमिश्रं शुक्रशोणितरूपं 'आइयइ'त्ति आददाति गृह्णातीति, 'अण्हयंतीए ओयाए तीए'त्ति तस्यां 'अशश् भोजने' अश्नत्यां यद्वा 'भुज पालनाभ्यवहारयोः' भुंजानायां–भोजनं कुर्वत्यां वा ओजसा–मातुराहारमिश्रेण शुक्रशोणितरूपेण गर्भो विवर्धते–वृद्धिं याति यावज्जात इति । 'भुजो भुंजजिमजेमकम्माण्हसमाणचमढचड्डा' इति (श्री सिद्ध० अ० ८ पा० ४ सू० ११०) प्राकृतसूत्रेण भुजधातोः अण्ह इत्यादेश इति । पुनर्गौतमो वीरदेवं प्रश्नयति—

**कइ णं भंते! माउअंगा पण्णत्ता ?, गोयमा! तओ माउअंगा पण्णत्ता, तंजहा–मंसे १ सोणिए २ मत्थुलुंगे ३, कइ णं भंते ! पिउअंगा पण्णत्ता ?, गोयमा ! तओ पिउअंगा पन्नत्ता, तंजहा–अट्ठि १ अट्ठिमिंजा २ केसमंसुरोमनहा ३ ( सूत्रं ६ )**

गर्भे आहारपोषणादि सू. ५ मातापित्रंगानि सू. ६

'कइ णं भंते !' हे भदन्त! णं इति वाक्यालङ्कारे कति मातुरङ्गानि आर्त्तवबहुलानीत्यर्थः प्रज्ञप्तानि ?, जगदीश्वरो जगत्त्राता जगद्भावविज्ञाता वीर आह–हे गणधर ! गौतम ! त्रीणि मातुरङ्गानि प्रज्ञप्तानि मया अन्यैश्च जगदीश्वरैः, तद्यथा–मांसं–पललं १ शोणितं–रुधिरं २ मत्थुलुंगेति–मस्तकभेज्जकं, अन्ये त्वाहुः–मेदःफिप्फिसादिः मस्तुलुंगमिति ३ ॥ 'कइ णं भंते !' कति हे भदन्त ! पैतृकाङ्गानि शुक्रविकारबहुलानीत्यर्थः प्रज्ञप्तानि ?, हे गौतम ! त्रीणि पैतृकाङ्गानि प्रज्ञप्तानि, तद्यथा–अस्थि–हड्डं १ अस्थिमिञ्जा–अस्थिमध्यावयवः २ केशश्मश्रुरोमनखाः ३, तत्र केशाः–शिरोजाः श्मश्रूणि–कूर्चकेशाः रोमाणि–कक्षादिकेशाः नखाः–करजा इति, केशादिकं बहुसमानरूपत्वादेकमेव, उभयव्यतिरिक्तानि तु शुक्रशोणितयोः समविकाररूपत्वात् मातापित्रोः साधारणानीति ॥ गर्भस्थोऽपि किं कश्चिद् जीवो नरकं देवलोकं वा गच्छतीति गौतमो वीरं प्रश्नयति—



**जीवे णं भंते ! गब्भगए समाणे नेरइएसु उववज्जिज्जा ?, गोयमा ! अत्थेगइए उववज्जिज्जा अत्थेगइए णो उववज्जिज्जा, से केणट्ठेणं भंते! एवं वुचइ–जीवे णं गब्भगए समाणे नेरइएसु अत्थेगइए उववज्जिज्जा अत्थेगइए नो उववज्जिज्जा ?, गोयमा! जे णं जीवे गब्भगए समाणे सन्नी पंचिंदिए सव्वाहिं पज्जत्तीहिं पज्जत्तए वीरियलद्धीए विभंगनाणलद्धीए विउव्वियलद्धीए विउव्वियलद्धीपत्ते पराणीयं आगयं सुचा निसम्म पएसे निच्छुहइ निच्छुहित्ता विउव्वियसमुग्घाएणं समोहणइ समोहणित्ता चाउरंगिणिं सिन्नं सन्नाहेइ सन्नाहित्ता पराणीएणं सद्धिं संगामं संगामेइ, से णं जीवे अत्थकामए १ रज्जकामए २ भोगकामए ३ कामकामए ४ अत्थकंखिए १ रज्जकंखिए २ भोगकंखिए ३ कामकंखिए ४ अत्थपिवासिए १ भोग० २ रज्ज० ३ काम० ४, तच्चित्ते १**

तम्मणे २ तल्लेसे ३ तदज्झवसिए ४ तत्तिव्वज्झवसाणे ५ तयट्ठोवउत्ते ६ तदप्पियकरणे ७ तब्भावणाभाविए ८ एयंसि च णं ( चे ) अंतरंसि कालं करिज्जा नेरइएसु उववज्जिज्जा, से एएणं अट्ठेणं एवं वुच्चइ जीवे णं गब्भगए समाणे नेरइएसु अत्थेगइए उववज्जेजा अत्थेगइए नो उववज्जेजा गोयमा ! ( सूत्रं ७ )

'जीवे णं गब्भग०' हे भदन्त ! जीवो गर्भगतः सन् मृत्वेति शेषः नरकेषु उत्पद्यते ?, हे गौतम ! अस्ति-विद्यते 'एगइए'त्ति एककः कश्चित् सगर्वराजादिगर्भरूपः उत्पद्यते अस्त्ययं पक्षः यदुत एककः कश्चिन्नोत्पद्यते, 'से' अथ केनार्थेन हे भदन्त ! एवं प्रोच्यते-जीवो गर्भगतः सन् नरकेषु अस्त्येककः उत्पद्यते अस्त्येकको नोत्पद्यते ?, हे गौतम ! 'जे णं'ति यो जीवः 'णं' इति वाक्यालङ्कारे गर्भगतः सन् आहारादिका संज्ञा विद्यते यस्य स संज्ञी पञ्च इन्द्रियाणि-श्रवण १ घ्राण-२ रसन ३ चक्षुः ४ स्पर्शन ५ लक्षणानि विद्यन्ते यस्य स पञ्चेन्द्रियः सर्वाभिराहारशरीरेन्द्रियोच्छ्वासभाषामनोलक्षणाभिः षड्भिः पर्याप्तिभिः पर्याप्तः, मासद्वयोपरिवर्त्तीत्यनुक्तमपि ज्ञेयं, यतो मासद्वयमध्यवर्त्ती मनुष्यो गर्भस्थो नरके देवलोकेऽपि न यातीत्युक्तं भगवत्यामिति, पूर्वभविकवीर्यलब्ध्या पूर्वभविकविभंगज्ञानलब्ध्या विभंगनाणलद्धीएत्ति पदं भगवत्यां नास्ति, पूर्वभविकवैक्रियलब्ध्या वैक्रियलब्धिं प्राप्तः सन् यद्वा वीर्यलब्धिकः विभङ्गज्ञानलब्धिकः वैक्रियलब्धिकः वैक्रियलब्धिं प्राप्तः सन् परानीकं-शत्रुसैन्यं आगतं-प्राप्तं 'सोचे'ति श्रुत्वा 'निसम्म'त्ति निशम्य-मनसा अवधार्य 'पएसे निच्छुभइ'त्ति स्वप्रदेशान् अनन्तानन्तकर्मस्कन्धानुविद्धान् गर्भदेशाद् बहिः क्षिपति-निष्काशयति निष्काश्य विष्कम्भबाहल्याभ्यां शरीरप्रमाणं आयामतः सङ्ख्येययोजनप्रमाणं जीवप्रदेशदण्डं निसृजति, वैक्रियसमुद्घातेन 'समोहणइ'त्ति

समवहन्ति-समवहतो भवति तथाविधपुद्गलग्रहणार्थं, समवहत्य चत्वारि गजाश्वरथपदातिलक्षणानि अङ्गानि विद्यन्ते यस्याः यस्यां वा सा चतुरङ्गिनी तां चतुरङ्गिनीं 'सिन्न'न्ति सेनां कटकमित्यर्थः 'सन्नाहेइ'त्ति सज्जां करोतीत्यर्थः सज्जां कृत्वा परानीकेन सार्धं संग्रामं संग्रामयति-युद्धं करोतीत्यर्थः 'से णं जीवे'त्ति णं इति वाक्यालङ्कारे सः-युद्धकर्त्ता जीवः 'अत्थकामए'त्ति अर्थे-द्रव्ये कामो-वाञ्छामात्रं यस्यासावर्थकामः एवमन्यान्यपि विशेषणानि, नवरं-राज्यं-नृपत्वं २ भोगाः—गन्धरसस्पर्शाः ३ कामौ—शब्दरूपे ४ 'अत्थकंखिए'त्ति काङ्क्षा गृद्धिरासक्तिरित्यर्थः अर्थे—द्रव्ये काङ्क्षा सञ्जाता अस्येति अर्थकाङ्क्षितः १ एवमन्यानि राज्यकाङ्क्षितः २ भोगकाङ्क्षितः ३ कामकाङ्क्षितः ४ 'अत्थपिवासिए'त्ति पिपासेव पिपासा-प्राप्तेऽप्यर्थेऽतृप्तिः अर्थे अर्थस्य वा पिपासा सञ्जाता अस्येति अर्थपिपासितः १ एवमन्यानि राज्यपिपासितः २ भोगपिपासितः ३ कामपिपासितः ४, 'तच्चित्ते'त्ति तत्र-अर्थराज्यभोगकामे चित्तं-सामान्योपयोगरूपं यस्यासौ तच्चित्तः १ 'तम्मणे'त्ति तत्रैव-अर्थादौ मनः-विशेषोपयोगरूपं यस्य स तन्मनाः २ 'तल्लेसे'त्ति तत्रैव-अर्थादौ लेश्या-आत्मपरिणामविशेषः यस्यासौ तल्लेश्यः ३ 'तदज्झवसिए'त्ति इह अध्यवसायः-अध्यवसितं तत्र तच्चित्तादिभावयुक्तस्य सतः तस्मिन् अर्थादावेवाध्यवसितं-परिभोगक्रियासम्पादनविषयमस्येति तदध्यवसितः ४ 'तत्तिव्वज्झवसाणे'त्ति तस्मिन्नेव-अर्थादौ तीव्रं-आरम्भकालादारभ्य प्रकर्षयायि अध्यवसानं-प्रयत्नविशेषलक्षणं यस्य स तत्तीव्राध्यवसानः ५ 'तदट्ठोवउत्ते'त्ति तदर्थे-अर्थादिनिमित्तं उपयुक्तः-अवहितः तदर्थोपयुक्तः ६ 'तदप्पियकरणे'त्ति तस्मिन्नेव-अर्थादौ अर्पितानि-आहितानि करणानि-इन्द्रियाणि कृतकारितानुमतिरूपाणि वा येन स तदर्पितकरणः ७ 'तब्भावणाभाविए'त्ति

असकृदनादौ संसारे तद्भावनया–अर्थादिसंस्कारेण भावितो यः स तद्भावनाभावितः ८, 'एयंसि'त्ति एतस्मिन् 'णं' इति वाक्यालङ्कारे चेत्–यदि 'अन्तरंसि'त्ति सङ्ग्रामकरणावसरे कालं–मरणं कुर्यात् तदा नरकेषु गाढदुःखाकुलेषु उत्पद्यते, नरभवं त्यक्त्वा महारम्भी मिथ्यादृष्टिः नरके यातीत्यर्थः, 'से' अथ एतेनार्थेनैवं प्रोच्यते–हे गौतम! जीवो गर्भगतः सन् नरकेषु अस्ति एककः कश्चिदुत्पद्यते अस्ति एककः कश्चिन्नोत्पद्यते ॥ पुनर्गौतमो वीरं प्रश्नयतीत्याह—



**जीवे णं भंते! गब्भगए समाणे देवलोगेसु उववज्जिज्जा ?, गो०! अत्थेगइए उव० अत्थेग० नो उव०, से केणट्ठेणं भंते! एवं वुच्चइ–अत्थेगइए उ० अत्थेगइए नो उ० ?, गोयमा! जे णं जीवे गब्भगए समाणे सन्नी पंचिंदिए सव्वाहिं पज्जत्तीहिं पज्जत्तए वेउव्वियलद्धीए ओहिनाणलद्धीए तहारूवस्स समणस्स वा माहणस्स वा अंतिए एगमवि आयरियं धम्मियं सुवयणं सुचा निसम्म तओ से भवइ तिव्वसंवेगसंजायसड्ढे तिव्वधम्माणुरायरत्ते, से णं जीवे धम्मकामए १ पुण्णकामए २ सग्गकामए ३ मुक्खकामए ४ धम्मकंखिए १ पुण्णकंखिए २ सग्गकंखिए ३ मुक्खकंखिए ४ धम्मपिवासिए १ पुण्णपिवासिए २ सग्गपिवासिए ३ मुक्खपिवासिए ४ तच्चित्ते १ तम्मणे २ तल्लेसे ३ तदज्झवसिए ४ तत्तिव्वज्झवसाणे ५ तदप्पियकरणे ६ तयट्ठोवउत्ते ७ तब्भावणाभाविए ८ एयंसि णं ( चे ) अंतरंसि कालं करिज्जा देवलोएसु उववज्जिज्जा, से एएणं अट्ठेणं गोयमा! एवं वुच्चइ अत्थेगइए उववज्जिज्जा अत्थेगइए नो उववज्जिज्जा ( सूत्रं ८ )**



'जीवे णं भंते! गब्भगए देव०' जीवो हे भदन्त! गर्भगतः सन् मृत्वेति शेषः देवलोकेषु उत्पद्यते ?, हे गौतम! अस्ति एककः कश्चित् उत्पद्यते अस्त्येककः कश्चिन्नोत्पद्यते, 'से' अथ केनार्थेन हे भदन्त! एवं प्रोच्यते–कश्चिदुत्पद्यते कश्चिन्नोत्पद्यते ?, हे गौतम! यो जीवो गर्भगतः सन् संज्ञी पञ्चेन्द्रियः सर्वाभिः पर्याप्तिभिः पर्याप्तः, मासद्वयोपरिवर्त्तीत्यवधार्य मासद्वयमध्यवर्ती तु स्वर्गे न यातीति, पूर्वभविकवैक्रियलब्धिकः पूर्वभविकावधिज्ञानलब्धिकः तथारूपस्य–तथाविधस्य उचितस्येत्यर्थः श्रमणस्य–साधोः वाशब्दो देवलोकोत्पादहेतुत्वं प्रति श्रमणमाहनवचनयोस्तुल्यत्वप्रदर्शनार्थः 'माहणस्स'त्ति मा हन २ इत्येवमादिशति स्वयं स्थूलप्राणातिपातादिनिवृत्तत्वाद् यः स माहनः यद्वा ब्रह्मणो–ब्रह्मचर्यस्य देशतः सद्भावात् ब्राह्मणो–देशविरतस्तस्य वा यद्वा श्रमणः–साधुस्तस्य माहनः–परमगीतार्थस्तस्य वा 'अंतिए'त्ति समीपे एकमप्यास्तामनेकं आर्यं–आराद् यातं पापकर्मभ्य इत्यार्यं अत एव धार्मिकमिति सुवचनं–शोभनवाक्यं श्रुत्वा–आकर्ण्य निशम्य–मनसा अवधार्य 'तउ'त्ति तदनन्तरमेव सः–गर्भस्थजन्तुः भवति–जायते 'तिव्वसं०' तीव्रसंवेगेन–भृशं दुःखलक्षाकुलभवभयेन सञ्जाता–सम्यगुत्पन्ना श्रद्धा–श्रद्धानं धर्मादिषु यस्य स तीव्रसंवेगसञ्जातश्रद्धः 'तिव्वध०' तीव्रो यो धर्मानुरागः–धर्मबहुमानस्तेन रक्त इव–रञ्जित इव यः स तीव्रधर्मानुरागरक्तः स गर्भस्थः वैराग्यवान् जीवः 'णं' वाक्यालङ्कारे 'धम्मकामए'त्ति धर्मे–श्रुतचारित्रलक्षणे कामो–वाञ्छामात्रं यस्य स धर्मकामकः १ पुण्ये–तत्फलभूते शुभकर्मणि कामो यस्य स पुण्यकामकः स्थानाङ्गे तु–अन्न१पान२वस्त्रा३ऽऽलय४शयना५ऽऽसन६मनो७वचन८काय९लक्षणं नवविधं पुण्यं प्रतिपादितं जगदीश्वरेण भगवतेति २, स्वर्गे–देवलोके कामो यस्य स स्वर्गकामकः ३ मोक्षे–शिवे अनन्तानन्तसुखमये कामो यस्य स मोक्षकामकः ४, एवमग्रेऽपि, नवरं काङ्क्षा–गृद्धिरासक्तिरित्यर्थः,

धर्मे काङ्क्षा सञ्जाता अस्येति धर्मकाङ्क्षितः १ पुण्यकाङ्क्षितः २ स्वर्गकाङ्क्षितः ३ मोक्षकाङ्क्षितः ४ पिपासेव पिपासा-प्राप्तेऽपि धर्मेऽतृप्तिः धर्मपिपासा सा सञ्जाता अस्येति धर्मपिपासितः १ पुण्यपिपासितः २ स्वर्गपिपासितः ३ मोक्षपिपासितः ४, 'तच्चित्ते' इत्यादिअष्टविशेषणानि धर्मपुण्यस्वर्गमोक्षे शुभानि वाच्यानि, तच्चित्तः १ तन्मनाः २ तल्लेश्यः ३ तदध्यवसितः ४ तत्तीव्राध्यवसायः ५ तदर्थोपयुक्तः ६ तदर्पितकरणः ७ तद्भावनाभावितः ८, 'एयंसि णं'ति एतस्मिन्नन्तरे-धर्मध्यानावसरे कालं-मरणं 'करिज्ज'त्ति कुर्यात् तदा देवलोकेषु उत्पद्यते, 'से' अथैतेनार्थेन हे गौतम! एवमस्माभिः प्रोच्यते-अस्ति एककः कश्चित् स्वर्गे उत्पद्यते 'अत्थि'त्ति अस्ति एककः कश्चित् नोत्पद्यते इति ॥ गर्भाधिकारे पुनर्गौतमस्वामी श्रीमहावीरं प्रश्नयति—

जीवे णं भंते! गब्भगए समाणे उत्ताणए वा पासिल्लए वा अंबखुज्जए वा अच्छिज्ज वा चिट्ठिज्ज वा निसीइज्ज वा तुयट्टिज्ज वा आसइज्ज वा सइज्ज वा माउए सुयमाणीए सुयइ जागरमाणीए जागरइ सुहियाए सुहिओ भवइ दुहियाए दुक्खिओ भवइ?, हंता गोयमा! जीवे णं गब्भगए समाणे उत्ताणए वा जाव दुक्खिओ भवइ ॥-( सूत्रं ९ ) थिरजायंपिहु रक्खइ सम्मं सारक्खई तओ जणणी । संवाहई तुयट्टइ रक्खइ अप्पं च गब्भं च ॥ १ ॥ ( १८ ) अणुसुयइ सुयंतीए जागरमाणीएँ जागरइ गब्भो । सुहियाए होइ सुहियो दुहियाए दुक्खिओ होइ ॥ २ ॥ (१९) उच्चारे पासवणे खेलं संघाणओवि से नत्थि । अट्ठीट्ठीमिंजनहकेसमंसुरोमेसु परिणामो ॥ ३ ॥ ( २० ) एवं बुंदिमइगओ गब्भे संवसइ दुक्खिओ जीवो । परमतमिसंधकारे अमिज्झभरिए पएसंमि ॥ ४ ॥ ( २१ ) आउसो ! तओ नवमे मासे तीए वा पडुप्पन्ने वा अणागए वा चउण्हं माया अण्णयरं पयायइ, तंजहा-इत्थिं वा इत्थिरूवेणं १ पुरिसं वा पुरिसरूवेणं २ नपुंसगं वा नपुंसगरूवेणं ३ बिंबं वा बिंबरूवेणं ४ ( सू० १० ) अप्पं सुक्कं बहुं उउयं, इत्थी तत्थ जायइ १ । अप्पं उयं बहुं सुक्कं, पुरिसो तत्थ जायइ २ ॥१॥ ( २२ ) दुण्हंपि रत्तसुक्काणं, तुल्लभावे नपुंसओ ३ । इत्थिउयसमाओगे, बिंबं तत्थ जायइ ४ ॥२॥ ( २३ ) अह णं पसवणकालसमयंसि सीसेण वा पाएहिं वा आगच्छइ समागच्छइ तिरियमागच्छइ विणिघायमावज्जइ (सू०११)

कोई पुण पावकारी बारस संवच्छराइं उक्कोसं । अच्छइ उ गब्भवासे असुइप्पभवे असुइयंमि ॥१॥ (२४) जायमाणस्स जं दुक्खं, मरमाणस्स वा पुणो। तेण दुक्खेण संमूढो, जाइं सरइ नऽप्पणो ॥२॥ (२५) वीसरसरं रसंतो जो सो जोणीमुहाओ निप्फिडइ । माऊए अप्पणोऽविय वेयणमउलं जणेमाणो ॥ ३ ॥ ( २६ ) गब्भघरयंमि जीवो कुंभीपागंमि नरयसंकासे । वुत्थो अमिज्झमज्झे असुइप्पभवे असुइयंमि ॥ ४ ॥ ( २७ ) पित्तस्स य सिंभस्स य सुक्कस्स य सोणियस्स चिय मज्झे । मुत्तस्स पुरीसस्स य जायइ जह वच्चकिमिउव्व ॥ ५ ॥ ( २८ ) तं दाणि सोयकरणं केरिसयं होइ तस्स जीवस्स ?। सुक्करुहिरागराओ जस्सुप्पत्ती सरीरस्स ॥ ६ ॥ ( २९ ) एयारिसे सरीरे कलमलभरिए अमिज्झसंभूए। निययं विगणिज्जंतं सोयमयं केरिसं तस्स ? ॥ ७ ॥ ( ३० )

'जीवे णं भंते! ग०' जीवो हे भदन्त! गर्भगतः सन् 'उत्ताणए वे'ति उत्तानको वा सुप्तोन्मुखो वेत्यर्थः 'पासिल्लिए

व'त्ति पार्श्वशायी वा 'अंबखुज्जए व'त्ति आम्रफलवत् कुब्ज इति 'अच्छिज्ज'त्ति आसीनः सामान्यतः, एतदेव विशेषतः उच्यते–'चिट्ठेज्ज व'त्ति ऊर्ध्वस्थानेन 'निसीज्जए वे'ति निषदनस्थानेन 'तुयट्टेज्ज व'त्ति शयीत निद्रया इति वेति 'आसइज्ज व'त्ति आश्रयति गर्भमध्यप्रदेशं 'सइज्ज व'त्ति शेते निद्रां विनेति, मात्रा मातरि वा 'सुयमाणीए'त्ति शयनं कुर्वत्या कुर्वत्यां वा 'सुयइ'त्ति स्वपिति निद्रां करोतीत्यर्थः, 'जागरमाणीए'त्ति जाग्रत्या–जागरणं कुर्वत्या कुर्वत्यां वा जागर्त्ति, निद्रानाशं कुरुते इत्यर्थः, सुखितायां सुखितो भवति, दुःखितायां दुःखितो भवति, 'हन्ता गोयम ! त्ति' हन्त इति कोमलामन्त्रणार्थो दीर्घत्वं च मागधदेशीप्रभवं, उभयत्रापि 'जीवे णं गब्भगए समाणे' इत्यादेः प्रत्युच्चारणं तु स्वानुमतत्वप्रदर्शनार्थं, वृद्धाः पुनराहुः–'हंता गोयमा !' इत्यत्र हन्त इति एवमेतदिति अभ्युपगमवचनं, यदनुमतं तत्प्रदर्शनार्थं 'जीवे णं गब्भगए' इत्यादि प्रत्युच्चारितमिति, हे गौतम ! जीवो गर्भगतः सन् उत्तानको वा यावद्दुःखितो भवतीति । अथ पूर्वोक्तं पद्येन गाथाचतुष्टयेन दर्शयन्नाह–'थिरजा०' स्थिरजातं–स्थिरीभूतं 'रक्खइ'त्ति रक्षति–सामान्येन पालयति ततः सा जननी तं सम्यग्–यत्नादिकरणेन रक्षति 'संवाहइ'त्ति संवहति गमनाऽऽगमनादिप्रकारेण 'तुयट्टइ'त्ति त्वग्वर्त्तयति–स्वापयति रक्षति–आहारादिना पालयति आत्मानं च गर्भं चेति ॥ १ ॥ 'अणु०'अनुस्वपिति–अनुशेते 'सुयंतीए'त्ति स्वपत्यां सत्यां जाग्रत्यां जागर्ति गर्भः–उदरस्थजन्तुः जनन्यां सुखितायां सुखितो भवति दुःखितायां दुःखितो भवति ॥२॥'उच्चारो०' उच्चारो–विष्ठा प्रश्रवणं–मूत्रं खेलो–निष्ठीवनं 'सिंघाणं'ति नासिकाश्लेष्मापि 'से' तस्य गर्भस्थस्य नास्तीति, जननीजठरस्थो जीव आहारत्वेन तु यद् गृह्णाति तदस्थ्यस्थिमिंजनखकेशश्मश्रुरोमेषु (मसु) पूर्वव्याख्यातेषु 'परिणामो'त्ति



परिणामयतीत्यर्थः ॥३॥ 'एवं बु०' एवमुक्तप्रकारेण 'बुंदि'मिति शरीरं अतिगतः–प्राप्तः सन् गर्भे–जननीकुक्षौ संवसति–संतिष्ठते चारकगृहे चौरवत्, 'दुक्खिओ जीवो'त्ति अग्निवर्णाभिः सूचीभिः भिद्यमानस्य जन्तोः यादृशं दुःखं जायते ततोऽप्यष्टगुणं यद् दुःखं भवति तेन सदृशेन दुःखेन दुःखितो भवति जीवः गर्भे, किंभूते गर्भे?–तमसा अन्धकारं यत्र तमोऽन्धकारः परमश्चासौ तमोऽन्धकारश्च परमतमोऽन्धकारः महान्धकारव्याप्त इत्यर्थः तस्मिन्, अमेध्यभृते–विष्ठापूर्णे प्रदेशे–जीववसनस्थानके ॥ ४ ॥ इति। 'आउसो ! तओ' इत्यादि, हे आयुष्मन् !–हे इन्द्रभूते ! ततः–अष्टमासानन्तरं नवमे मासे अतीते वा–अतिक्रान्ते वा प्रत्युत्पन्ने वा–वर्त्तमाने वा अनागते वा–अप्राप्ते वा 'चउण्हं' चतुर्णां स्त्र्यादिरूपाणां वक्ष्यमाणानां माता–जननी अन्यतरत्–चतुर्णां मध्ये एकतरं 'पयायइ'त्ति प्रसूते 'तंजह'त्ति तत् पूर्वोक्तं यथा–स्त्रियं वा स्त्रीरूपेण–स्त्र्याकारेण प्रसूते १ पुरुषं वा पुरुषरूपेण–पुरुषाकारेण २ नपुंसकं वा नपुंसकरूपेण–नपुंसकाकारेण ३ बिम्बं वा बिम्बरूपेण–बिम्बाकारेण, बिम्बमिति गर्भप्रतिबिम्बं गर्भाकृतिरार्त्तवपरिणामो नतु गर्भ एव ४, एते कथं जायन्त ? इत्याह–'अप्पं' अल्पं शुक्रं 'बहुउउय'त्ति बहुकं–प्रभूतं 'उयं'ति ओजः–आर्त्तवं स्त्री तत्र गर्भाशये जायते–उत्पद्यते १, अल्पं–ओजः बहु शुक्रं पुरुषस्तत्र जायते २, द्वयोरपि रक्तशुक्रयोः–रुधिरवीर्ययोः तुल्यभावे–समत्वे सति नपुंसको जायते ३, 'इत्थी'त्ति स्त्रियाः–नार्या 'ओय'त्ति ओजसः 'समाओगे'त्ति समायोगः–वातवशेन तत्स्थिरीभवनलक्षणं स्त्र्योजःसमायोगस्तस्मिन् सति बिम्बं तत्र–गर्भाशये प्रजायते ४ इति । 'अह ण' मित्यादि, अथानन्तरं 'णं' वाक्यालङ्कारे प्रसवकालसमये–जन्मकालावसरे शीर्षेण वा–मस्तकेन वा पादाभ्यां वा–चरणाभ्यां वा आगच्छति 'समागच्छ-

इ'त्ति समम्–अविषममागच्छति'सम्मं आगच्छइ'त्ति पाठे सम्यक्–अनुपघातहेतुना आगच्छति–मातुरुदरात् योन्या-निष्क्रामति, 'तिरियमागच्छइ'त्ति तिरश्चीनो भूत्वा जठरान्निर्गन्तुं प्रवर्त्तते यदि तदा विनिर्घातं–मरणमापद्यते निर्गमाभावादिति। 'कोइ पुण०' कोऽपि पुनः पापकारी–ग्रामघातरामाजठरविदारणजिनमुनिमहाशातनाविधायी वातपित्तादिदूषितो देवादिस्तम्भितो वेति शेषः, द्वादश संवत्सराणि उत्कृष्टतः 'अच्छइ'त्ति तिष्ठति, तुशब्दात् गर्भोक्तं प्रबलं दुःखं सहमानोऽवतिष्ठते गर्भवासे–गर्भगृहे, किम्भूते ?–अशुचिप्रभवे अशुचिके–अशुच्यात्मके इति ॥ १ ॥ ननु नवमासमात्रान्तरितमपि प्राक्तनं भवं सामान्यजीवः किं न स्मरतीत्याह–'जायमा०' गाथा, जायमानस्य–गर्भान्निःसरतः तत्र उत्पद्यमानस्य वा यद्दुःखं भवति वा–अथवा पुनर्म्रियमाणस्य यद्दुःखं भवति तेन दारुणदुःखेन संमूढो–महामोहं प्राप्तः जातिं–प्राक्तनभवं आत्मीयं–स्वकीयं मूढात्मा प्राणी न स्मरति–कोऽहं पूर्वभवे देवादिकोऽभवमिति न जानातीति ॥ २ ॥ 'वीसर' गाथा, 'वीसर'त्ति परमकरुणोत्पादकं'सरं'ति' स्वरं–ध्वनिं 'रसंतो'त्ति भृशं कुर्वन् स गर्भस्थो जीवः योनिमुखात् 'निप्फिडइ'त्ति निष्क्रामति मातुः आत्मनोऽपिच वेदनामतुलां जनयन्–उत्पादयन् ॥ ३ ॥ 'गब्भत्थ' गाथा, गर्भगृहे जीवः कुंभीपाके–कोष्ठिकाकृतितप्तलोहभाजनसदृशे नरकसदृशे–नारकोत्पत्तिस्थानतुल्ये 'वुच्छो'त्ति उषितः–स्थितः, अमेध्यं–गूथं मध्ये यस्य गर्भगृहस्य सः अमेध्यमध्यस्तस्मिन् अशुचिप्रभवे–जम्बालाद्युद्भवे अशुचिके–अपवित्रस्वरूपे ॥ ४ ॥ 'पित्त०' पित्तस्य 'सिंभस्स' श्लेष्मणः शुक्रस्य शोणितस्य मूत्रस्य पुरीषस्य–विष्ठायाः मध्ये–मध्यभागे जायते–उत्पद्यते, क इव ?–'वच्चकिम्मिउव'त्ति वर्चस्वकृमिवत्–विष्ठानीलंगुवत्, यथा कृमिः–द्वीन्द्रियजन्तुविशेषः उदरमध्यस्थविष्ठायामुत्पद्यते तथा जीवोऽ-



पीति ॥ ५ ॥ 'तं दाणि०' तत् 'दाणि'ति इदानीं–साम्प्रतं शौचकरणं–शरीरसंस्कारकरणं कीदृशं भवति तस्य–गर्भनिर्गतस्य जीवस्य ?, यस्य भङ्गुरशरीरस्योत्पत्तिः–प्रादुर्भावः शुक्ररुधिराकरात्–वीर्यरुधिरखनेः वर्त्तत इति ॥ ६ ॥ 'एया०' एतादृशे शरीरे कलमलभृते–उदरस्थजलवटकदमादिपूर्णे अमेध्यसम्भूते–विष्ठाकीर्णोदरसम्भूते 'निययं विगणिज्जंत' मिति पदद्वये 'सप्तम्या द्वितीये' ( श्रीसि. अ० पा. ३ सू. १३७ ) ति सप्तम्यर्थे द्वितीया, निजके–आत्मीये 'विगणिज्जंत'मिति आत्मपरेषां जुगुप्सायोग्ये शौचमतं–पवित्रत्वाङ्गीकारलक्षणं, यथा मयाऽस्य स्नानचन्दनादिना पवित्रत्वं विधेयमिति, यद्वा शौचेन–वस्त्रचन्दनाभरणादिना मदो–गर्वो यत्र सनत्कुमारचक्रिवत् तत् शौचमदं यथा कीदृशं मम शरीरं शोभतेऽलङ्कारादिनेति, यदिवा एवंविधे शरीरे कुत्रापि रोगादिना विनष्टे शोकमतं–शोकाङ्गीकारकरणं यथा–हा मम सुन्दरं शरीरं स्फोटकादिना विनष्टमिति, कीदृशं तस्य जीवस्येति ॥ ७॥ अथ जीवानां ग्रन्थमुखे द्वितीयगाथया सूचिता दश दशाः निरूप्यन्ते–

**आउसो ! एवं जायस्स जंतुस्स कमेण दस दसा एवमाहिज्जंति तंजहा–बाला १ किड्डा २ मंदा ३ बला य ४ पण्णा य ५ हायणि ६ पवंचा ७ । पब्भारा ८ मुम्मुही ९ सायणी य दसमा य १० कालदसा ॥ १ ॥ ( ३१ ) जायमित्तस्स जंतुस्स, जा सा पढमिया दसा । न तत्थ सुहं दुक्खं वा, नहु जाणंति बालया ॥ १ ॥ ( ३२ ) बीईयं च दसं पत्तो, नाणाकीलाहिं कीडइ । न य से कामभोगेसु, तिव्वा उप्पज्जई रई ॥ २ ॥ ( ३३ ) तइयं च दसं पत्तो, पंचकामगुणे नरो । समत्थो भुंजिउं भोए, जइ से अत्थि घरे**

धुवा ॥ ३ ॥ ( ३४ ) चउत्थी उ बला नाम, जं नरो दसमस्सिओ । समत्थो बलं दरिसेउं, जइ भवे निरुवद्दवो ॥ ४ ॥ ( ३५ ) पंचमी उ दसं पत्तो, आणुपुव्वीएँ जो नरो । समत्थोऽत्थं विचिंतेउं, कुडुंबं चाभिगच्छइ ॥ ५ ॥ ( ३६ ) छट्ठीओ हायणी नामा, जं नरो दसमस्सिओ । विरज्जइ उ कामेसुं, इंदिएसु य हायइ ॥ ६ ॥ ( ३७ ) सत्तमी य पवंचा ओ, जं नरो दसमस्सिओ । निच्छुभइ चिक्कणं खेलं, खासई य खणे खणे ॥ ७ ॥ ( ३८ ) संकुइयवलीचम्मो, संपत्तो अट्ठमीदसं । नारीणं च अणिट्ठो य, जराए परिणामिओ ॥ ८ ॥ ( ३९ ) नवमी मुम्मुही नाम, जं नरो दसमस्सिओ । जराघरे विणस्संते, जीवो वसइ अकामओ ॥ ९ ॥ ( ४० ) हीणभिन्नसरो दीणो, विवरीओ विचित्तओ । दुब्बलो दुक्खिओ सुयई, संपत्तो दसमीं दसं ॥ १० ॥ ( ४१ )

'आउसो ए०' हे आयुष्मन्! एवम्–उक्तप्रकारेण जातस्य–उत्पन्नस्य जन्तोः–जीवस्य क्रमेण–अनुक्रमेण दश दशा–दशावस्थाः, दशवर्षप्रमाणा प्रथमा दशा–अवस्था १ दशवर्षप्रमाणा द्वितीया दशाऽवस्था २ इत्येवं दश दशाः, एवं–वक्ष्यमाणप्रकारेण 'आहिज्जंती'ति आख्यायन्ते–कथ्यन्ते, तद्यथा—'बाला १ किड्डा २' इत्यादिगाथा, बालस्येयमवस्था धर्मधर्मिणोरभेदात् बाला १, क्रीडाप्रधाना दशा क्रीडा २, मन्दो–विशिष्टबलबुद्धिकार्योपदर्शनासमर्थो भोगानुभूतावेव समर्थो यस्यां दशायां सा मन्दा ३, यस्यां पुरुषस्य बलं स्यात् सा बलयोगात् बला ४, प्रज्ञा–वाञ्छितार्थसम्पादनकुटुम्बाभिवृद्धिविषया बुद्धिः तद्योगात् दशा प्रज्ञा ५, हापयति पुरुषस्येन्द्रियाणि मनाक् स्वार्थग्रहणाप्रभूणि करोतीति हापनी ६, प्रपञ्चयति–विस्तारयति खेलकासादि इति प्रपञ्चा ७, प्राग्भारं–ईषदवनतमुच्यते तदिव गात्रं यस्यां सा प्राग्भारा ८, मोचनं–मुक् जराराक्षसीसमाक्रान्तशरीरगृहस्य मोचनं तं प्रति मुखं–आभिमुख्यं यस्यां सा मुन्मुखी ९, स्वापयति–निद्रायत्तं करोति सा शायिनी दशमी १०, एताः कालोपलक्षिताः दशाः कालदशाः उच्यन्ते इति ॥१॥ अथ सूत्रेणैव दश दशा दर्शनन्नाह'—'जायमि०' श्लोकः, जातमात्रस्य जन्तोः–जीवस्य या सा प्रथमिका दशा–दशवर्षप्रमाणावस्था 'तत्थ'त्ति तस्यां प्रथमदशायां प्रायेण सुखं दुःखं वा नेति–नास्ति, तथाऽऽत्मपरेषां सुखदुःखं नैव जानंति बालकाः–जातिस्मरणादिज्ञानविकला इति ॥ १ ॥ 'बीईयं च' द्वितीयां दशां प्राप्तो जीवो नानाक्रीडाभिः क्रीडति–क्रीडां करोतीत्यर्थः, 'से' तस्य द्वितीयाऽवस्थावर्त्तिनो जीवस्य कामौ च–शब्दरूपे भोगाश्च–गन्धरसस्पर्शाः कामभोगास्तेषु तीव्रा–प्रबला रतिः–मन्मथवाञ्छा नोत्पद्यते न प्रकटीभवतीत्यर्थः ॥ २ ॥ 'तइयं च' तृतीयां दशां प्राप्तः पञ्चकामगुणे–शब्दरूपरसगन्धस्पर्शलक्षणे नरो–मनुष्यः आसक्तो भवति, तथा तदा भोगान् भोक्तुं समर्थो भवति यदि 'से' तस्य जीवस्य अस्तीति–सत्तारूपतया वर्त्तते गृहे–स्वावासे 'धुवे'ति राजाद्युपद्रवाभावेन निश्चला समृद्धिरिति शेषः ॥ ३ ॥ 'चउ०' चतुर्थी बलानाम्नी दशा वर्तते यां बलानाम्नीं दशामाश्रितो नरः समर्थो भवति बलं–स्ववीर्यं द्रष्टुं ( दर्शयितुं ) फलिहमल्लवत्, यदि भवेत् निरुपद्रवो–रोगादिक्लेशरहितः, अन्यथा मात्स्यिकमल्लवत् विनाशं यातीति ॥४॥ 'पंचमी उ' पञ्चमीं दशां प्राप्तः आनुपूर्व्या–परिपाट्या यो नरः स समर्थो भवति अर्थं विचिन्तयितुं–द्रव्यचिन्तां कर्तुं च पुनः कुटुम्बं प्रति अभिगच्छति–कुटुंबचिन्तायां प्रवर्त्तते इत्यर्थः ॥५॥ 'छट्ठी उ' षष्ठी हापनीनाम्नी दशा वर्त्तते,

यां हापनीं दशां नर आश्रितः 'विरज्जइ'त्ति प्रवाहेण विरक्तो भवति, केभ्यः ?–काम्यंत इति कामाः–कन्दर्पाभिलाषास्तेभ्यः इन्द्रियेषु–श्रवणघ्राणचक्षुर्जिह्वास्पर्शनलक्षणेषु हीयते–हानिं गच्छतीत्यर्थः ॥ ६ ॥ 'सत्तमी०' सप्तमी प्रपञ्चा दशा यां दशां आश्रितः 'निच्छुभइ'त्ति बहिर्निक्षिपति यत्र कुत्रापि बहिर्निस्सारयति चिक्कणं–पिच्छिलं चेपकतुल्यमित्यर्थः 'खेलं' श्लेष्माणं च पुनः क्षणं २–वारं २ 'खासइ'त्ति–खासितं करोतीत्यर्थः ॥ ७ ॥ 'संकुइ०' अष्टमीं दशां प्राप्तो जीवः सङ्कुचितवलिचर्मा भवति, च पुनः जरया परिणमितो–व्याप्तः स्यात्, नारीणां स्वपरस्त्रीणां अनिष्टो भवति, श्रावस्तीपुरीवास्तव्यजिनदत्तश्राद्धवदिति ॥ ८ ॥ नवमी मुन्मुखी नाम्नी वर्त्तते, यां मुन्मुखीं दशां नरः आश्रितः 'जराघरे' जरागृहे शरीरे विनश्यति सति जीवोऽकामको–विषयादिवाञ्छारहितो वसति ॥ ९ ॥ 'हीण०' हीनस्वरः–लघुध्वनिः भिन्नस्वरः–स्वभावस्वरादन्यस्वरः दीनः–दीनत्वं गतः विपरीतः–पूर्वावस्थातः विचित्तः विचित्रो वा–नानास्वरूपः दुर्बलः–कृशाङ्गः दुःखितो–रोगादिपीडालक्षव्याप्तः एवंविधो जीवः स्वपिति स्वशरीरे स्वगृहे वा संप्राप्तः, कां ?–दशमीं दशामिति १० ॥ यस्यां यद् भवति तदाह—

**दसगस्स उवक्खेवो वीसइवरिसो उ गिण्हई विज्जं। भोगा य तीसगस्स य चत्तालीसस्स विन्नाणं ॥११॥(४२) पण्णासगस्स चक्खू हायइ सट्ठिक्कयस्स बाहुबलं। भोगा य सत्तरिस्स य असीइगस्सा य विन्नाणं ॥ १२ ॥ (४३) नउई नमइ सरीरं वाससए जीवियं चयइ। कित्तिओऽत्थ सुहो भागो दुहो भागो य कित्तिओ ?॥१३॥(४४)(सूत्रं१२) जो वाससयं जीवइ, सुही भोगे पभुंजइ। तस्सावि सेविउं सेओ, धम्मो य जिणदेसिओ। १४। (४५) किं पुण सपच्चवाए, जो नरो निच्चदुक्खिओ ?। सुट्ठुयरं तेण कायव्वो, धम्मो य जिणदेसिओ ॥ १५ ॥ (४६) नंदमाणो चरे धम्मं, वरं मे लट्ठतरं भवे। अनंदमाणोऽवि चरे, मा मे पावतरं भवे ॥ १६ ॥ (४७) नवि जाई कुलं वावि, विज्जा वाऽवि सुसिक्खिया। तारे नरं व नारिं वा, सव्वं पुन्नेहिं वड्ढई ॥ १७ ॥ (४८) पुन्नेहिं हीयमाणेहिं, पुरिसागारोऽवि हायई। पुन्नेहिं वड्ढमाणेहिं, पुरिसगारोऽवि वड्ढई ॥ १८ ॥ (४९)**

'दसग०' दशकस्य–दशवर्षप्रमाणस्य जीवस्य 'उवक्खेवो' त्ति बालोत्पाटनं मुण्डनमिति लोकोक्तिः, उपलक्षणत्वादन्यदपि प्रथमावस्थाभवो महोत्सवविशेषो ज्ञेय इति १, विंशतिवर्षको–द्वितीयावस्थावर्त्ती विद्यां गृह्णातीति २, त्रिंशत्कस्य भोगा भवन्ति ३ चत्वारिंशत्कस्य विज्ञानं भवति ४ ॥ ११ ॥ 'पन्ना०' पञ्चाशत्कस्य जीवस्य 'चक्खु'त्ति चक्षुर्बलं हीयते ५, षष्टिकस्य बाहुबलं हीयते ६, सप्ततिकस्य भोगा हीयन्ते ७, अशीतिकस्य विज्ञानं हीयते ८ ॥ १२ ॥ 'नउइ०' नवतिकस्य शरीरं नमति–वक्रं भवतीत्यर्थः ९, वर्षशते सति जीवितं त्यजति जीवः १० ॥ 'कित्तिउऽत्थ' अत्र–शतवर्षे जीवानां सुखभागः कीर्त्तितो–निरूपितोऽस्तीति, चशब्दोऽप्यर्थे दुःखभागोऽपि कीर्तितोऽस्तीति, यद्वा अत्र 'कित्तिओ'त्ति कियान् सुखभागो वर्त्तते कियान् दुःखभागो वर्त्तते ॥ १३ ॥ अथ शतवर्षायुष्कस्य जीवस्यान्यस्यापि उपदेशं ददातीति 'जो वास०' यो जीवो वर्षशतं जीवति प्राणान् धारयतीत्यर्थः, च पुनः सुखी भोगान् भुंक्ते तस्यापि जीवस्य सेवितुं–सदा कर्तुं श्रेयो–मङ्गलं धर्मो–दुर्गतिपतज्जीवाधारः जिनदेशितः–केवलिना भाषितः ॥ १४ ॥ 'किं पुण०' किं पुनः सप्रत्यवाये–सकष्टे आयुषि काले वा सति इति शेषः, यो नरो नित्यदुःखितः–सदा दुःखाकुलो भवेत् ?, तेन दुःखितजीवेन जिनद-

प्रतिदशकं हानिः गा. ४४
पुण्यकर्त्तव्यता गा. ४९

शिंतो धर्मः सुष्ठुतरं-विशेषतः कर्त्तव्यो नन्दिषेणपूर्वभवब्राह्मणजीववदिति ॥ १५ ॥ 'नंदमा०' नन्दमानः-सौख्यं भुञ्जानो धर्मं जिनोक्तं चरेत्-कुर्यादित्यर्थः, किंभूतं धर्मं?-वरं-श्रेष्ठं शिवप्रापकत्वात्, कया भावनया धर्मं कुर्यादित्याह-मे-मम अत्र भवे परभवे च 'लष्टतरं' अतिकल्याणं भवेदिति भावनयेति, अनन्दमाणोऽवि-अनन्दन्नपि सौख्यमभुञ्जानोऽपि धर्मं कुर्यात्, कया भावनयेत्याह-मे-मम पापतरं मा भवतु-एकं तावदहं पापफलं भुंजे पुनर्धर्माकरणे मा भवतु मेऽतिपापफलमिति भावनयेति ॥ १६ ॥ किंच-'नवि जा०' नरं-पुरुषं वाशब्दाद् बालादिभेदभिन्नं नारीं-स्त्रियं वाशब्दात् क्लीबं जातिः-मातृपक्षः ब्राह्मणादिका जातिर्वा कुलं-पितृपक्षः उग्रभोगादिकं कुलं वा विद्या वा सुशिक्षिता-सदभ्यस्ता वा नापीति-नैव तारयति-भवाब्धितीरं प्रापयति, सर्वं स्वर्गापवर्गादिसौख्यं पुण्यैः-संविग्नसाधुदानादिभिर्वर्धते-प्राप्यते इत्यर्थः, अत्रान्यत्रापि वकारचकारापिशब्दाः यथायोगं पूरणसमुच्चयादिकेऽर्थे ज्ञातव्या इति ॥ १७ ॥ 'पुन्नेहिं' पुण्यैः-अन्नपानवस्त्रपीठफलकौषधादिभिः साधुदानादिभिरुपार्जितशुभफलैः हीयमानैः-क्षयं गच्छद्भिः पुरुषकारः-पुरुषाभिमानः अपिशब्दादन्यदपि यशःकीर्त्तिस्फीतिलक्ष्म्यादिकं हीयते-शनैः शनैः क्षयं यातीत्यर्थः, पुण्यैः वर्द्धमानैः पुरुषकारोऽपि वर्द्धते ॥ १८ ॥

**पुन्नाइं खलु आउसो! किचाइं करणिज्जाइं पीइकराइं वन्नकराइं धणकराइं कित्तिकराइं, नो य खलु आउसो! एवं चिंतियव्वं-एस्संति खलु बहवे समया १ आवलिया २ खणा ३ आणापाणू ४ थोवा ५ लवा ६ मुहुत्ता ७ दिवसा ८ अहोरत्ता ९ पक्खा १० मासा ११ रिऊ १२ अयणा १३ संवच्छरा १४ जुगा**



**१५ वाससया १६ वाससहस्सा १७ वाससयसहस्सा १८ वासकोडीओ १९ वासकोडाकोडीओ २० जत्थ णं अम्हे बहूइं सीलाइं वयाइं गुणाइं वेरमणाइं पचक्खाणाइं पोसहोववासाइं पडिवज्जिस्सामो पट्ठविस्सामो करिस्सामो, ता किमत्थं आउसो! नो एवं चिंतेयव्वं भवइ ?, अंतरायबहुले खलु अयं जीविए, इमे बहवे वाइयपित्तियासिंभियसंनिवाइया विविहा रोगायंका फुसंति जीवियं ( सूत्रं १३ )**

'पुन्नाइं०' इत्यादि गद्यं, खलु निश्चये हे आयुष्मन् ! पुण्यानि-शुभप्रकृतिरूपाणि कृत्यानि-कार्याणि करणीयानि-कर्त्तुं योग्यानि प्रीतिकराणीति-मित्रादिना सह स्नेहोत्पादकानि वर्णकराणि-एकदिग्व्यापिसाधुवादकराणीत्यर्थः, धनकराणि-सद्रत्नसमृद्धिकराणि कीर्त्तिकराणि-सर्वदिग्व्यापिसाधुवादकराणीत्यर्थः, नैव च खलु एवार्थत्वात् हे आयुष्मन् ! एवं-वक्ष्यमाणं चिन्तितव्यं-मनसा विकल्पनोयं 'एस्संती'ति एष्यन्ति-आगमिष्यन्ति खलु निश्चये बहवः समयाः, 'बहव' इत्यग्रेऽपि योज्यं, सर्वनिकृष्टः कालः समयः १, असङ्ख्यातैः समयैरावलिका, जघन्ययुक्तासङ्ख्येयसमयराशिमाना इत्यर्थः २, अष्टादशनिमेषैः काष्ठा, काष्ठाद्वयं लवः, लवैः पञ्चदशभिः कला, कलाद्वयं लेशः, पञ्चदशभिर्लेशैः क्षणः ३, सङ्ख्येया आवलिका आनः एकः उच्छ्वास इत्यर्थः ता एव सङ्ख्येया निश्वासः द्वयोरपि कालः प्राणः ४, सप्तभिः प्राणैः स्तोकः ५ सप्तभिः स्तोकैर्लवः ६ सप्तसप्तत्या लवैः मुहूर्त्तः ७ पञ्चदशमुहूर्त्तैर्दिवसः ८ त्रिंशन्मुहूर्त्तैरहोरात्रः ९ तैः पञ्चदशभिः पक्षः १० ताभ्यां द्वाभ्यां मासः ११ मासद्वयेन ऋतुः १२ ऋतुत्रयमानमयनं १३ अयनद्वयेन संवत्सरः १४ पञ्चभिस्तैर्युगं १५ विंशत्या युगैर्वर्षशतं १६ तैर्दशभिर्वर्षसहस्रं १७ तेषां शतेन वर्षशतसहस्रं लक्षमित्यर्थः १८, शतल-

क्षैर्वर्षैर्वर्षकोटिः १९वर्षकोटिः वर्षकोटिभिः गुण्यते वर्षकोटीकोटिः भवति १००००००००००००० इति २० ॥ यत्र समयावलिकादौ 'णं' वाक्यालङ्कारे 'अम्हे'त्ति वयं बहूनि–प्रभूतानि शीलानि–समाधानानि व्रतानि–महाव्रतानि 'गुणा'इति गुणान्–विनयादीन्, अत्र 'गुणाद्याः क्लीबे वे' (श्रीसि. अ. ८ पा. १ सू. २४) ति क्लीबत्वं, 'वेरमणाइं'ति असंयमादिभ्यो निवर्त्तनानि प्रत्याख्यानानीति–नमस्कारसहितपौरुष्यादीनि पौषधः–पर्वदिनमष्टम्यादि तत्रोपवासा–अभक्तार्थकरणानि पौषधोपवासास्तान् प्रतिपद्यामहे–आचार्यादिपार्श्वेऽङ्गीकरिष्यामः 'पट्ठविस्सामो'त्ति प्रस्थापयिष्यामः अङ्गीकरणानन्तरं प्रथमतया कर्त्तुमारप्स्यामः करिष्याम इति–साक्षात्कारेण सततं निष्पादयिष्यामः, 'त'त्ति तावदादौ किमर्थं नैव चिन्तयितव्यं?, हे आयुष्मन्! त्वं शृणु यतो भवति अन्तरायबहुलं–विघ्नप्रचुरमिदं खलु निश्चये जीवितं–आयुर्जीवानां, तथा इमे–प्रत्यक्षाः बहवः वातिका–वातरोगोद्भवाः पैत्तिकाः–पित्तरोगजाः 'सिंभिय'त्ति श्लेष्मभवाः सान्निपातिकाः–सन्निपातजन्याः विविधाः–अनेकप्रकारा रोगा–व्याधयस्ते च ते आतङ्काश्च–कृच्छ्रजीवितकारिणः इति रोगातङ्काः जीवितं स्पृशंतीति। अथ सर्वान् अपि मनुजान् एते रोगाः स्पृशन्ति न वा? इति दर्शयन्नाह–

आसी य खलु आउसो! पुव्विं मणुया ववगयरोगायंका बहुवाससयसहस्सजीविणो, तंजहा–जुयलधम्मिया अरिहन्ता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा चारणा विज्जाहरा। ते णं मणुया अणइवरसोमचारुरूवा भोगुत्तमा भोगलक्खणधरा सुजायसव्वंगसुन्दरंगा रत्तुप्पलपउमकरचरणकोमलंगुलितला नगनगरमगरसागरचक्कंकधरंकलक्खणंकियतला सुप्पइट्ठियकुम्मचारुचलणा आणुपुव्विं सुजायपीवरंगुलिया उन्नयतणुतंब-



निद्धनहा संठियसुसिलिट्ठगूढगुप्फा एणीकुरुविंदावत्तवट्टाणुपुव्वजंघा समुग्गनिमग्गगूढजाणू गयससणसुजायसन्निभोरू वरवारणमत्ततुल्लविक्कमविलासियगई सुजायवरतुरयगुज्झदेसा आइण्णहयव्व निरुवलेवा पमुइयवरतुरयसीहअइरेगवट्टियकडी साहयसोणंदमुसलदप्पणनिगरियवरकणगच्छरुसरिसवरवइरवलियमज्झा गंगावत्तपयाहिणावत्ततरंगभंगुररविकिरणतरुणबोहियविकोसायंतपउमगंभीरवियडनाभी उज्जुयसमसहियसुजायजायजच्चतणुकसिणनिद्धआइज्जलडहसुकुमालमउयरमणिज्जरोमराई झसविहगसुजायपीणकुच्छी झसोयरा पउमवियडनाभा संगयपासा सन्नयपासा सुंदरपासा सुजायपासा मियमाइयपीणरईयपासा अकरंडुयकणयरुयगनिम्मलसुजायनिरुवहयदेहधारी पसत्थबत्तीसलक्खणधरा कणगसिलायलुज्जलपसत्थसमतलउवचियविच्छिन्नपिहुलवच्छा सिरिवच्छंकियवच्छा पुरवरफलिहवट्टियभुया भुयगीसरविउलभोगआयाणफलिहउच्छूढदीहबाहू जुगसंनिभपीणरइयपीवरपउट्ठा संठियउवचियघणथिरसुबद्धसुवट्टसुसिलिट्ठलट्ठपव्वसंधी रत्ततलोवचियमउयमंसलसुजायलक्खणपसत्थअच्छिद्दजालपाणी पीवरवट्टियसुजायकोमलवरंगुलिया तंबतलिणसुइरुइरनिद्धनक्खा चंदपाणिलेहा सूरपाणिलेहा संखपाणिलेहा चक्कपाणिलेहा सुत्थियपाणिलेहा ससिरविसंखचक्कसुत्थियसुविभत्तसुविरइयपाणिलेहा वरमहिसवराहसीहसद्दूलउसभनागवरविउलउन्नयमउयक्खंधा चउरंगुलसुप्पमाणकंबुवरसरिसगीवा अवट्ठियसुविभत्तचित्तमंसू मंसलसंठियपसत्थसद्दूलविउलहणुया ओयवियसिलप्पवालबिंबफलसन्निभाधरुट्ठा पंडुरससिसगलविमलनिम्मलसंखगो-

क्खीरकुंददगरयमणालियाधवलदंतसेढी अखंडदंता अफुडियदंता अविरलदंता सुनिद्धदंता सुजायदंता एकदंता सेढीविव अणेगदंता हुयवहनिद्धंतधोयतत्ततवणिज्जरत्ततलतालुजीहा सारसनवथणियमहुरगभीरकुंचनिग्घोसदुंदुहिसरा गरुलाययउज्जुतुंगनासा अवदारियपुंडरीयवयणा कोकासियधवलपुंडरीयपत्तलच्छा आनामियचावरुइलकिण्हचिहुरराईसुसंठियसंगयआययसुजायभुमया अल्लीणपमाणजुत्तसवणा सुसवणा पीणमंसलकवोलदेसभागा अइरुग्गयसमग्गसुनिद्धचंदद्धसंठियनिडाला उडुवइपडिपुन्नसोमवयणा छत्तागारुत्तमंगदेसा घणनिचियसुबद्धलक्खणुन्नयकूडागारनिभनिरुवमपिंडियग्गसिरा हुयवहनिद्धंतधोयतत्ततवणिज्जकेसंतकेसभूमी सामलीबोंडघणनिचियच्छोडियमिउविसयसुहुमलक्खणपसत्थसुगंधिसुन्दरभुयमोयगभिंगनीलकज्जलपहट्ठभमरगणनिद्धनिउरंबनिचियकुंचियपयाहिणावत्तमुद्धसिरया लक्खणवंजणगुणोववेया माणुम्माणपमाणपडिपुन्नसुजायसव्वंगसुंदरंगा ससिसोमागारकंतपियदंसणा सब्भावसिंगारचारुरूवा पासाईया दरिसणिज्जा अभिरूवा पडिरूवा, ते णं मणुया ओहस्सरा मेहस्सरा हंसस्सरा कोंचस्सरा नंदिस्सरा नंदिघोसा सीहस्सरा सीहघोसा मंजुस्सरा मंजुघोसा सुस्सरा सुस्सरघोसा अणुलोमवाउवेगा कंकग्गहणी कवोयपरिणामा सउणीप्फोसपिट्ठंतरोरुपरिणया पउमुप्पलसुगंधिसरिसनीसाससुरभिवयणा छवी निरायंका उत्तमपसत्था अइसेसनिरुवमतणू जल्लमल्लकलंकसेयरयदोसवज्जियसरीरनिरुवलेवा छायाउज्जोविअंगमंगा वज्जरिसहनारायसंघयणा समचतुरंससंठाणसंठिया छधणुसहस्साइं उड्ढं उच्चत्तेणं पण्णत्ता ते णं मणुया दो



छप्पण्णगपिट्ठिकरंडयसया पण्णत्ता समणाउसो! ते णं मणुया पगइभद्दया पगइविणीया पगइउवसंता पगइपयणुकोहमाणमायालोभा मिउमद्दवसंपन्ना अल्लीणा भद्दया विणीया अप्पिच्छा असंनिहिसंचया अचंडा असिमसिकिसिवाणिज्जविवज्जिया विडिमंतरनिवासिणो इच्छियकामकामिणो गेहागाररुक्खकयनिलया पुढविपुप्फफलाहारा ते णं मणुयगणा पण्णत्ता ( सूत्रं १४ )

'आसी य खलु' आसन्–चशब्दात् संति भविष्यन्ति च खलु–निश्चये हे आयुष्मन्!–हे गणिगुणगणधर! पूर्वं–पूर्वस्मिन् काले प्रथमद्वितीयतृतीयचतुर्थारकेषु यथासम्भवं मनुजाः–नराः रोगो–व्याधिः स चासावातङ्कश्च रोगातंकः व्यपगतो रोगातङ्के येषां ते व्यपगतरोगातङ्काः यद्वा रोगश्च–ज्वरादिः आतङ्कश्च–सद्यःप्राणहारी शूलादी रोगातङ्कौ तौ व्यपगतौ येषां ते तथा, बहुवर्षशतसहस्रजीविनः, तद्यथा–युगलधार्मिकाः अर्हन्तः–तीर्थङ्कराश्चक्रवर्त्तिनः बलदेवा–वासुदेवज्येष्ठबान्धवः वासुदेवाः–बलदेवलघुबान्धवास्त्रिखण्डभोक्तारः चारणाः–जङ्घाचारणविद्याचारणलक्षणाः विद्यां धारयन्तीति विद्याधराः नमिविनम्याद्याः।'ते ण'मिति णं वाक्यालङ्कारे ते युगलधार्मिका अर्हदादयो मनुजाः–मनुष्याः 'अणइवरे'ति अतीव–अतिशयेन 'सोमं' दृष्टिसुभगं चारु रूपं येषां ते तथा यद्वा 'अणवइरसोमचारुरूव'त्ति अतीति अव्ययमतिक्रमार्थे न अति अनति सौम्यं च तच्चारु च सौम्यचारु सौम्यचारु च तद्रूपं च सौम्यचारुरूपं वरं च तत्सौम्यचारुरूपं च वरसौम्यचारुरूपं अनतीति–अनतिक्रान्तं वरसौम्यचारुरूपं येषां ते अनतिवरसौम्यचारुरूपाः, देवैरपि स्वलावण्यगुणादिभिरजितरूपा इत्यर्थः, भोगैरुत्तमाः भोगोत्तमाः सर्वोत्तमभोगभोक्तार इत्यर्थः, भोगसूच-

कलक्षणानि–स्वस्तिकादीनि धारयन्तीति भोगलक्षणधराः सुजातानि–सुनिष्पन्नानि सर्वाणि अङ्गानि–अवयवाः यत्र तदेवंविधं सुन्दरं अङ्गं–शरीरं येषां ते सुजातसर्वाङ्गसुन्दराङ्गाः, 'रत्तुप्पलपउमकरचरणकोमलंगुलितल'त्ति रक्तोत्पलवत् करचरणानां कोमला अङ्गुल्यो येषां ते तथा, तथा पद्मवत् करचरणानां कोमलानि तलानि–अधोभागा येषां ते तथा, नगः–पर्वतः नगरं प्रतीतं मकरो–मत्स्यः सागरः–समुद्रः चक्रं प्रतीतं अङ्कधरः–चन्द्रः अङ्कः–तस्यैव लाञ्छनं मृगः एवंरूपैर्लक्षणैरङ्कितानि तलानि–पादाधोभागाः येषां ते तथा, सुप्रतिष्ठिताः–सत्प्रतिष्ठानवन्तः कूर्मवत्–कच्छपवत् चारवः चरणा येषां ते तथा, आनुपूर्व्या–परिपाट्या वर्द्धमाना हीयमाना वा इति गम्यते, सुजाताः–सुनिष्पन्नाः पीवराः अङ्गुलिकाः–पादाग्रावयवाः येषां ते तथा, उन्नताः–तुङ्गाः तनवः–प्रतलाः ताम्रा–अरुणाः स्निग्धाः–कान्तिमन्तो नखा येषां ते तथा, संस्थितौ–संस्थानविशेषवन्तौ सुश्लिष्टौ–मांसलौ गूढौ–मांसलत्वादनुपलक्ष्यौ गुल्फौ–घुटकौ येषां ते तथा, आनुपूर्व्येण–परिपाट्या वर्धमाना हीयमाना वा इति गम्यते, एणी–हरिणी तस्याश्चेह जङ्घा ग्राह्या, कुरुविन्दं–तृणविशेषः वत्ता च–सूत्रवलनकं एतानीव वृत्ते–वर्तुले आनुपूर्व्येण स्थूलस्थूलत्वेनेति गम्यं, जङ्घे–प्रसृते येषां ते तथा, समुद्गस्येव–समुद्गकपक्षिण इव निमग्ने–अन्तःप्रविष्टे गूढे–मांसलत्वादनुपलक्ष्ये जानुनी–अष्ठीवन्तौ येषां ते तथा, गजो–हस्ती 'ससण'त्ति श्वसिति–प्राणिति अनेनेति श्वसनः–शुण्डादण्डः गजस्य श्वसनः गजश्वसनस्तस्य सुजातस्य–सुनिष्पन्नस्य सन्निभे–सदृशे ऊरू येषां ते तथा, वरवारणस्य–प्रधानगजेन्द्रस्य तुल्यः–सदृशो विक्रमः–पराक्रमो विलासिता–सञ्जातविलासा च गतिर्येषां ते तथा, सुजातवरतुरगस्येव सुगुप्तत्वेन गुह्यदेशो–लिङ्गलक्षणोऽवयवो येषां



ते तथा, आकीर्णहय इव–जात्याश्व इव निरुपलेपाः–तथाविधमलविकलाः, प्रमुदितो–हृष्टो यो वरतुरगः सिंहश्च ताभ्यां सकाशादतिरेकेण–अतिशयेन वर्त्तिता–वर्तुला कटिर्येषां ते तथा, 'साहय'त्ति संहृतं–संक्षिप्तं यत् सोणंदं त्रिकाष्ठिकामध्यं मुशलं–प्रतीतं दर्पणो–दर्पणगण्डो विवक्षितः 'निगरिय'त्ति सर्वथा शोधितं सारीकृतमित्यर्थः यद् वरकनकं तस्य यत् 'छरु'त्ति खड्गादिमुष्टिः स च ( ततः ) एतद्द्वन्द्वस्तैः सदृशो यः, वरवज्रवद् वलितः क्षामो–वलित्रयोपेतो मध्यभागो येषां ते तथा, गङ्गावर्त्तक इव प्रदक्षिणावर्त्ता–दक्षिणावर्त्ता तरङ्गैरिव तरङ्गैः–तिसृभिर्वलिभिर्भङ्गुरा तरङ्गभङ्गुरा रविकिरणैस्तरुणं–अभिनवं तत्प्रथमतया तत्कालमित्यर्थः बोधितं–विकासितं 'विकोसायंत'त्ति विगतकोशं कृतं यत् पङ्कजं तद्वत् गम्भीरा विकटा च नाभिर्येषां ते तथा, 'उज्जुय०' ऋजुकानां–अवक्राणां समानानामायामादिप्रमाणतः 'संहिय'त्ति संहितानाम्–अविरलानां सुजातानां जात्यानां–स्वाभाविकानां तनूनां–सूक्ष्माणां कृष्णानां–कालवर्णानां अथवा कृत्स्नानां–अभिन्नानां स्निग्धानां–कान्तानां आदेयानां–सौभाग्यवतां लडहानां–मनोज्ञानां सुकुमारमृदूनां–अत्यंतकोमलानां रमणीयानां च रोम्णां–तनुरुहाणां राजिः–आवलिर्येषां ते तथा, झषविहगयोरिव–मत्स्यपक्षिणोरिव सुजातौ–सुभूतौ पीनौ–उपचितौ कुक्षी–जठरदेशौ येषां ते तथा, 'झषोदरा' इति प्रतीतं पद्मवद् विकटा नाभिर्येषां ते तथा, इदं च विशेषणं न पुनरुक्तं पूर्वोक्तस्य नाभिविशेषणस्य बाहुल्येन पाठादिति, सङ्गतपार्श्वाः–युक्तपार्श्वाः सन्नतौ–अधोऽधो नमन्तौ पार्श्वौ येषां ते सन्नतपार्श्वाः अत एव सुन्दरपार्श्वाः सुजातपार्श्वाः पार्श्वगुणोपेतपार्श्वाः इत्यर्थः मितौ–परिमितौ मातृकौ–मात्रोपेतौ एकार्थपदद्वययोगादतीव मात्रान्वितौ नोचितप्रमाणाद्धीनाधिकौ पीनौ–उपचितौ रतिदौ–रमणीयौ पार्श्वौ येषां ते मितमातृकपीनरतिदपार्श्वा इत्यर्थः

'अकरंडुय'त्ति मांसोपचितत्वादविद्यमानपृष्ठिपार्श्वास्थिकमिव कनकरुचकं-काञ्चनकान्ति निर्मलं-स्वाभाविकमलरहितं आगन्तुकमलरहितं च सुजातं-सुनिष्पन्नं निरुपहतं-रोगादिभिरनुपहतं देहं-शरीरं धारयन्ति ये ते तथा, 'पसत्थबत्तीस०' छत्रं १ ध्वजः २ यूपः ३ स्तूपः ४ दामिणी रूढिगम्यं ५ कमण्डलु ६ कलशः ७ वापी ८ स्वस्तिकः ९ पताका १० यवः ११ मत्स्यः १२ कूर्मः १३ रथवरः १४ मकरध्वजः १५ अङ्को-मृगः १६ स्थालं १७ अङ्कुशः १८ चूतफलकं १९ स्थापनकं २० अमरः २१ लक्ष्म्या अभिषेकः २२ तोरणं २३ मेदिनी २४ समुद्रः २५ प्रधानमन्दिरं २६ गिरिवरः २७ वरदर्पणः २८ लीलायमानगजः २९ वृषभः ३० सिंहः ३१ चामरं ३२, एतानि प्रशस्तानि द्वात्रिंशल्लक्षणानि धारयन्ति ये ते तथा, कनकशिलातलमिव उज्वलं प्रशस्तं समतलं-अविषमरूपं उपचितं-मांसलं विस्तीर्णपृथुलं-अतिविस्तीर्णं वक्षोहृदयं येषां ते तथा, श्रीवत्सेन अङ्कितं वक्षो येषां ते तथा, पुरवरस्य परिघा-अबद्धा अर्गला तद्वत् वर्तितौ-वृत्तौ भुजौ-बाहू येषां ते तथा, भुजगेश्वरो-भुजगराजः तस्य विपुलो-महान् यो भोगः-शरीरं तद्वत् आदीयत इत्यादानः-आदेयो रम्यो यः परिघः-अर्गला 'उच्छूढ'त्ति स्वस्थानाद् अवक्षिप्तो-निष्काशितः तद्वच्च दीर्घौ बाहू येषां ते तथा, युगसन्निभौ-यूपसदृशौ पीनौ-मांसलौ रतिदौ-रमणीयौ पीवरौ-महान्तौ प्रकोष्ठौ-कलाचिकादेशौ, तथा संस्थिताः-संस्थान विशेषवन्तः उपचिताः-सुनिचिताः घनाः-बहुप्रदेशाः स्थिराः-सुबद्धा स्नायुभिः सुष्ठु बद्धाः सुवृत्ताः-अतिशयेन वर्तुलाः सुश्लिष्टाः-सुघनाः लष्टाः-मनोज्ञाः पर्वसन्धयश्च- पर्वास्थिसंधानानि येषां ते तथा, रक्ततलौ-लोहिताधोभागौ 'उवचिय'त्ति औपचयिकौ उपचयनिर्वृत्तौ उपचितौ वा मृदुकौ-कोमलौ मांसवन्तौ सुजातौ-सुनिष्पन्नौ लक्षणप्रशस्तौ-प्रशस्तस्वस्तिकचक्रगदाशंखकल्पवृक्ष-



चन्द्रादित्यादिचिह्नौ अच्छिद्रजालौ-अविरलाङ्गुलिसमुदायौ पाणी-करौ येषां ते तथा, पीवराः-उपचिता वृत्ताः-वर्तुलाः सुजाताः-सुनिष्पन्नाः कोमलाः वराः अङ्गुल्यः-करशाखा येषां ते तथा, ताम्राः-अरुणाः तलिनाः-प्रतलाः शुचयः-पवित्रा रुचिरा-दीप्ताः स्निग्धा-अरूक्षाः नखा-नखराः येषां ते तथा, चन्द्र इव पाणिरेखा-हस्तरेखा येषां ते चन्द्रपाणिरेखाः, एवं सूर्यपाणिरेखाः शंखपाणिरेखाः स्वस्तिकपाणिरेखाः चक्रपाणिरेखाः, एतदेवानन्तरोक्तं विशेषणपञ्चकं तत्प्रशस्तताप्रकर्षप्रतिपादनाय सङ्ग्रहवचनेनाह-शशिरविशङ्खचक्रस्वस्तिकरूपाः विभक्ता-विभागवत्यः सुविरचिताः-सुकृताः पाणिपुरेखाः येषां ते तथा, वरमहिषवराहसिंहशार्दूलवृषभनागवरवत् विपुलौ-प्रतिपूर्णौ उन्नतौ-तुङ्गौ मृदुकौ-कोमलौ द्वौ स्कन्धौ येषां ते तथा वरमहिषः-सैरभेयःवराहः-शूकरः शार्दूलो-व्याघ्रः नागवरो-गजवरः, चत्वार्यङ्गुलानि स्वाङ्गुलापेक्षया सुष्ठु प्रमाणं यस्याः कम्बुवरेण च-प्रधानशङ्खेन सदृशी-उन्नतत्ववलित्रययोगाभ्यां समाना ग्रीवा-कण्ठो येषां ते तथा, अवस्थितानि-न हीयमानानि न वर्द्धमानानि सुविभक्तानि चित्राणि च-शोभया अद्भुतभूतानि श्मश्रूणि-कूर्चकेशा येषां ते तथा, मांसलं संस्थितं प्रशस्तं शार्दूलस्येव विपुलं हनु-चिबुकं येषां ते तथा, 'ओयविय'त्ति परिकर्मितं यच्छिलाप्रवालं-विद्रुमं बिम्बफलं-गोल्हाफलं तत्सन्निभः-सदृशो रक्तत्वेन अधरोष्ठः-अधस्तनदन्तच्छदो येषां ते तथा, पाण्डुरं यच्छशिशकलं-चन्द्रखण्डं तद्वत् विमलः-आगन्तुकमलरहितः निर्मलः-स्वाभाविकमलरहितो यः शङ्खः तद्वत् गोक्षीरफेनवत् 'कुंद'त्ति कुन्दपुष्पवत् दकरजोवद् मृणालिकावत्-पद्मिनीमूलवत् धवला दन्तश्रेणिः-दशनपङ्क्तिर्येषां ते तथा, अखण्डदन्ताः-परिपूर्णदशनाः अस्फुटितदन्ताः-राजिरहितदन्ताः अविरलदन्ताः सुस्निग्धदन्ताः-अरूक्षदन्ताः सुजातदन्ताः-सुनिष्पन्नद-

न्ताः, एको दन्तो यस्या श्रेण्या सा एकदन्ता सा श्रेणिः येषां ते तथा ता इव दन्तानामतिघनत्वादेकदन्तश्रेणिस्तेषामिति भावः, अनेकदन्ताः द्वात्रिंशद्दन्ता इति भावः, यद्वा एका-एकाकारा दन्तश्रेणिर्येषां ते एकदन्तश्रेणयः ते इव परस्परं अनुपलक्ष्यमाणदन्तविभागत्वात् अनेके दन्ताः येषां ते अनेकदन्ता, एवं नामाविरलदन्ता यथा अनेकदन्ता अपि सन्तः एकाकारदन्तपङ्क्तय इव लक्ष्यंते इति भावः, हुतवहेन-अग्निना निर्ध्मातं-निर्दग्धं धौतं-प्रक्षालितमलं तप्तं च-उष्णं यत् तपनीयं-सुवर्णविशेषः तद्वत् रक्ततलं-लोहितरूपं तालु च-काकुदं जिह्वा च-रसना येषां ते तथा, 'सर'त्ति अत्र योज्यं सारसवत्-पक्षिविशेषवत् मधुरः स्वरः-शब्दो येषां ते तथा, नवमेघवत् गम्भीरः स्वरो येषां ते तथा, क्रौंचस्य-पक्षिविशेषस्येव निर्घोषो येषां ते तथा, दुन्दुभिवत्-भेरीवत् स्वरो येषां ते तथा, तत्र स्वरः-शब्दः षड्जः १ ऋषभः २ गान्धार ३ मध्यम ४ पञ्चम ५ धैवत ६ निषाद ७ रूपो वा एषां विस्तरस्वरूपं स्थानाङ्गानुयोगद्वारतोऽवगन्तव्यमिति, घण्टानुप्रवृत्तरणितमिव यः शब्दः स घोष उच्यते, नितरां घोषः निर्घोष इति, गरुडस्येव-सुपर्णस्येव आयता-दीर्घा ऋज्वी-सरला तुङ्गा-उन्नता नासा-घोणा येषां ते तथा, अवदालितं-रविकिरणैः विकाशितं यत् पुण्डरीकं-सितपद्मं तद्वद् वदनं-मुखं येषां ते तथा। 'कोकासिय'त्ति विकसिते प्रायः प्रमुदितत्वात्तेषां धवले-सिते पुण्डरीके 'पत्रले' पक्ष्मवती अक्षिणी-लोचने येषां ते तथा, आनामितं-ईषन्नामितं यच्चापं-धनुः तद्वद् रुचिरे-शोभने कृष्णचिकुरराजिसुसंस्थिते कुत्रापि कृष्णा भ्रूराजिः सुसंस्थिते संगते आयते-दीर्घे सुजाते-सुनिष्पन्ने भ्रुवौ येषां ते तथा, आलीनौ ननु टप्परौ प्रमाणयुक्तौ-उपपन्नप्रमाणौ श्रवणौ-कर्णौ येषां ते तथा अत एव सुश्रवणाः सुष्ठु श्रवणं-शब्दोपलंभो येषां ते तथा, पीनौ-मांसलौ कपोललक्षणौ देशभागौ



वदनस्यावयवौ येषां ते तथा, अचिरोद्गतः समग्रः-सम्पूर्णः सुस्निग्धः चन्द्रः-शशी तस्यार्द्धवत् संस्थितं-संस्थानं यस्य ललाटस्य तत्तथा तदेवंविधं 'निडाल'त्ति ललाटं-भालं येषां ते अचिरोद्गतसमग्रसुस्निग्धचन्द्रार्धसंस्थितललाटाः, उडुपतिरिव-चन्द्र इव प्रतिपूर्णं सौम्यं वदनं येषां ते उडुपतिप्रतिपूर्णसौम्यवदनाः, छत्राकारोत्तमाङ्गदेशा इति कण्ठ्यं, घनो-लोहमुद्गरस्तद्वन्निचितं-निबिडं यद्वा घनं-अतिशयेन निचितं सुबद्धं स्नायुभिः लक्षणोन्नतं-महालक्षणं कूटागारनिभं-सशिखरभवनतुल्यं निरुपमपिण्डिकेव वर्तुलत्वेन पिण्डिकायमानं अग्रशिरः-शिरोऽग्रं येषां ते घननिचितसुबद्धलक्षणोन्नतकूटागारनिभनिरुपमपिण्डिकाग्रशिरसः, हुतवहेन-अग्निना निर्ध्मातं धौतं तप्तं च यत्तपनीयं-रक्तवर्णसुवर्णं तद्वत् 'केसंत'त्ति मध्यकेशाः केशभूमिः-मस्तकत्वग् येषां ते हुतवहनिर्ध्मातधौततप्ततपनीयकेशान्तकेशभूमयः, शाल्मली-वृक्षविशेषः स च प्रतीत एव तस्य बोंडं-फलं तद्वत् छोटिता अपि घना निचिता-अतिशयेन निचिताः शाल्मलीबोण्डघननिचितच्छोटिताः, ते हि युगलधार्मिकाः केशपाशं न कुर्वन्ति परिज्ञानाभावात् केवलं छोटिता अपि तथा स्वभावतया शाल्मलीबोण्डाकारवत् घननिचिता अवतिष्ठन्ते तत एतद्विशेषणोपादानं, तथा मृदवः-अकर्कशाः विशदा-निर्मलाः सूक्ष्माः-श्लक्ष्णाः लक्षणा-लक्षणवन्तः प्रशस्ताः-प्रशंसाऽऽस्पदीभूताः सुगन्धयः-परमगन्धकलिताः अत एव सुन्दराः तथा भुजमोचको-रत्नविशेषः भृङ्गः-चतुरिन्द्रियपक्षिविशेषः नीलो-मरकतमणिः कज्जलं प्रतीतं प्रहृष्टः-प्रमुदितो यो भ्रमरगणः प्रहृष्टभ्रमरगणः प्रहृष्टो हि भ्रमरगणस्तारुण्यावस्थायां भवति तदानीं चातिकृष्ण इति प्रहृष्टग्रहणं तद्वत् स्निग्धाः-कालकान्तयः भुजमोचकभृङ्गनीलकज्जलप्रहृष्टभ्रमरगणस्निग्धाः तथा निकुरम्बाः-निकुरम्बीभूताः सन्तः निचिताः

अविकीर्णाः कुञ्चिताः-ईषत्कुटिलाः प्रदक्षिणावर्त्ताश्च मूर्धनि शिरोजाः-केशा येषां ते शाल्मलीबोण्डघननिचितच्छो-टितमृदुविशदप्रशस्तसूक्ष्मलक्षणसुगन्धिसुन्दरभुजमोचकभृङ्गनीलकज्जलप्रहृष्टभ्रमरगणस्निग्धनिकुरम्बनिचितप्रदक्षिणावर्त्त-मूर्धशिरोजसः, लक्षणानि-स्वस्तिकादीनि व्यञ्जनानि-मषतिलकादीनि गुणाः-क्षान्त्यादयस्तैरुपपेता-युक्ताः लक्षणव्यञ्ज-नगुणोपपेताः, तथा मानोन्मानप्रमाणैः प्रतिपूर्णानि सुजातानि-जन्मदोषरहितानि सर्वाण्यङ्गानि-अवयवाः यत्र तदेवं-विधं सुन्दरं अङ्गं-शरीरं येषां ते तथा, तत्र मानं-जलद्रोणप्रमाणता, सा चैवं-जलभृतकुम्भे प्रमातव्ये पुरुषे उपवेशिते यज्जलं-तोयं निर्गच्छति तद् यदि द्रोणमानं भवति तदा स पुरुषो मानोपपन्न इत्युच्यते, तत्र २५६ पलप्रमाणं द्रोणमा-नमिति, उन्मानं-तुलाऽऽरोपितस्यार्द्धभारप्रमाणता, भारमानं यथा-"षड्भिर्सर्षपैर्यवस्त्वेको, गुञ्जैका च यवैस्त्रिभिः । गुञ्जात्र-येण वल्लःस्यात्, गद्याणे ते च षोडश ॥ १ ॥ पलञ्च दश गद्याणैस्तेषां सार्द्धशतैर्मणं । मणैर्दशभिरेका च, धटिका कथिता बुधैः ॥ २ ॥ धटिभिर्दशभिस्ताभिरेको भारः प्रकीर्तितः" इति, प्रमाणं पुनः आत्माङ्गुलेन अष्टोत्तरशताङ्गुलो-च्छ्रयता, शशिवत् सौम्य आकारः कान्तं-कमनीयं प्रियं-प्रेमावहं दर्शनं च येषां ते तथा, स्वभावत एव शृङ्गारं-शृङ्गा-ररूपं चारु-प्रधानं रूपं-वेषो येषां ते तथा, 'प्रासादीयाः' प्रसादाय-मनःप्रसत्तये हिता तत्कारित्वात् प्रासादीयाः-मनः-प्रह्लत्तिकारिण इति भावः १ दर्शनीयाः-दर्शनयोग्याः यान् पश्यतश्चक्षुषी न श्रमं गच्छत इत्यर्थः २ अभि-सर्वेषां द्रष्टॄणां मनःप्रसादानुकूलतया अभिमुखं रूपं येषां ते अभिरूपाः अत्यन्तकमनीया इति भावः ३ अत एव प्रतिरूपाः प्रति विशिष्टं असाधारणं रूपं येषां ते प्रतिरूपाः, यद्वा प्रतिक्षणं नवं नवमिव रूपं येषां ते प्रतिरूपाः, ते मनुष्याः 'णं' वाक्यालङ्कारे



ओघः-प्रवाहः तद्वत् स्वरो येषां ते ओघस्वराः, मेघस्येवातिदीर्घः स्वरो येषां ते मेघस्वराः, हंसस्येव मधुरः स्वरो येषां ते हंसस्वराः, क्रौंचस्येवाप्रयासविनिर्गतोऽपि दीर्घदेशव्यापी स्वरो येषां ते क्रौंचस्वराः, नन्दिः-द्वादशतूर्यसङ्घातस्तद्वत् स्वरो येषां ते नन्दिस्वराः, नन्द्या इव घोषो-नादो येषां ते नन्दिघोषाः, सिंहस्येव प्रभूतदेशव्यापी स्वरो येषां ते सिंहस्वराः सिंहघोषाः मञ्जुः-प्रियः स्वरो येषां ते मञ्जुस्वराः मञ्जुः घोषो येषां ते मञ्जुघोषाः, एतदेव पदद्वयेन व्याचष्टे-सुस्वराः सुस्वरघोषाः, अनुलोमः-अनुकूलो वायुवेगः-शरीरान्तर्वर्त्तिवातजवो येषां ते अनुलोमवायुवेगाः, वायुगुल्मर-हितोदरमध्यप्रदेशा इति भावः, कङ्कः-पक्षिविशेषः तस्येव ग्रहणिः-गुदाशयो नीरोगवर्चस्कतया येषां ते कङ्कग्रहणयः, कपोतस्येव-पक्षिविशेषस्य परिणामः-आहारपाको येषां ते कपोतपरिणामाः, कपोतस्य हि जठराग्निः पाषाणलवानपि जर-यतीति श्रुतिः, एवं तेषामपि अत्यर्गलाहारग्रहणेऽपि न जातुचिदप्यजीर्णदोषो भवतीति, शकुनेरिव-पक्षिण इव पुरीषो-त्सर्गे निर्लेपतया 'फोसं'ति फोसः-अपानदेशः 'फुस उत्सर्गे' फुसन्ति-पुरीषमुत्सृजन्ति अनेनेति व्युत्पत्तेः, तथा पृष्ठं-प्रतीतं अन्तरे च-पृष्ठोदरयोरन्तराले पार्श्वावित्यर्थः ऊरू-जङ्घे चेति द्वन्द्वस्ते परिणता-विशिष्टपरिणामवन्तो येषां ते शकुनिफ्फोसपृष्ठान्तरोरुपरिणताः, पद्मं-कमलं उत्पलं-नीलोत्पलं यद्वा पद्मं-पद्मकाभिधानं गन्धद्रव्यं उत्पलं च-उत्पल-कुष्ठं तयोः गन्धेन-सौरभेण सदृशः-समो यो निःश्वासस्तेन सुरभि-सुगन्धि वदनं-मुखं येषां ते पद्मोत्पलगन्धसदृश-निःश्वाससुरभिवदनाः 'छवी'ति छविमन्तः उद्दीप्तवर्णया सुकुमालया च त्वचा युक्ता इति भावः, निरातङ्का-नीरोगा इत्यर्थः उत्तमा-उत्तमलक्षणोपेताः प्रशस्ताः अतिशेषा-कर्मभूमिकमनुष्यापेक्षया अतिशायिनी अत एव निरुपमा—

उपमारहिता तनुः—शरीरं येषां ते उत्तमप्रशस्तातिशेषनिरुपमतनवः, एतदेव सविशेषमाह—'जल्लमल'० याति च लगति चेति जल्लः पृषोदरादित्वान्निष्पत्तिः स्वल्पप्रयत्नापनेयः स चासौ मलश्च जल्लमलः स च कलङ्कं च—दुष्टतिलकादिकं स्वेदश्च—प्रस्वेदः रजश्च—रेणुः दोषः—मालिन्यकारिणी चेष्टा तेन वर्जितं निरुपलेपं च—मूत्रविष्ठाद्युपलेपरहितं शरीरं येषां ते जल्लमलकलङ्कस्वेदरजोदोषवर्जितनिरुपलेपशरीराः, सूत्रे च निरुपलेपशब्दस्य परनिपातः प्राकृतत्वात्, छायया— शरीरप्रभया उद्योतितमङ्गं—शरीरं अंगं च—प्रत्यङ्गं येषां ते तथा। वज्रऋषभनाराचं संहननं येषां ते वज्रऋषभनाराचसंहननाः, समचतुरस्रं च तत् संस्थानं च समचतुरस्रसंस्थानं तेन संस्थिताः समचतुरस्रसंस्थानसंस्थिताः, अनयोरग्रे व्याख्यां करिष्यामीति, षट् धनुःसहस्राणि अवसर्पिणीप्रथमारकापेक्षया ऊर्ध्वमुच्चत्वेन प्रज्ञप्ता इति, धनुःस्वरूपं जम्बूद्वीपप्रज्ञप्तौ यथा—अणंताणं सुहुमपरमाणुपोग्गलसमुदयसमागमेणं वावहारिए परमाणू णिप्फज्जति, तत्थ णो सत्थं संकामइ, अणंताणं वावहारियपरमाणूणं समुदयसमिइसमागमेणं सा एगा उसण्हसण्हियाति वा अट्ठ उसण्हसण्हियाउ सा एगा सण्हसण्हिया अट्ठ सण्हसण्हिया सा एगा उड्ढरेणू अट्ठ उड्ढरेणू सा एगा तसरेणू अट्ठ तसरेणू सा एगा रहरेणू अट्ठरहरेणूहिं एगे देवकुरुउत्तरकुराणं मणुयाणं वालग्गे अट्ठ देवकुरुउत्तरकुरुवालग्गा से एगे हरिवासरम्मगवासाणं मणुयाणं वालग्गे, एवं रम्मयहेरण्णहेमवएरण्णवयाणं मणुस्साणं पुव्वविदेहअवरविदेहाणं मणुस्साणं, अट्ठ पुव्वविदेहाणं मणुस्साणं वालग्गा सा एगा लिक्खा अट्ठ लिक्खाओ सा एगा जूया अट्ठ जूआओ से एगे जवमज्झे अट्ठ जवमज्झे से एगे अंगुले एतेणं अंगुलपमाणेणं छ अंगुलाइं पाओ बारस अंगुलाइं वितत्थी चउवीस अंगुलाइं रयणी अडयालीसअंगुलाइं कुच्छी



छण्णउअंगुलाइं से एगे अक्खेति वा दंडेति वा धणुति वा जुएति वा मुसलेति वा नालियाति वा, एतेणं धणुप्पमाणेणं दो धणुस्सहस्साइं गाउयमिति। तथा ते प्रथमारकमनुष्याः षट्पञ्चाशदधिकद्विपृष्ठकरण्डकशताः प्रज्ञप्ताः तीर्थङ्करैरिति, तथा तुवरीप्रमाणाहाराः षण्मासावशेषे आयुषि स्त्रीपुरुषयुगलप्रसवाः एकोनपञ्चाशद्दिनापत्यपालका दिनत्रये आहारेच्छाः १, द्वितीयारके तु द्विक्रोशोच्चाः १२८ पृष्ठकरण्डकाः चतुःषष्टिदिनापत्यपालकाः बदरप्रमाणाहारकाः दिनद्वये आहारेच्छवः २, तृतीये अरके क्रोशोच्चाः ६४ पृष्ठकरण्डकाः ७९ दिनापत्यपालकाः आमलकप्रमाणाहारकाः एकान्तराहारेच्छकाः ३, षट्पञ्चाशदन्तर्द्वीपे तु मनुष्याः अष्टधनुःशतप्रमाणशरीरोच्छ्रयाः चतुर्थाशिनः चतुःषष्टिपृष्ठकरण्डकाः एकोनाशीतिदिनानि कृतापत्यरक्षाः पल्योपमासंख्येयभागायुषः, तथा सर्वेऽपि युगलजीवाः निजायुःसमे देवे हीनायुषि देवे वा उत्पद्यन्ते, सर्वयुगलजीवाः हस्त्यश्वकरभगोमहिष्यादीनां सद्भावेऽपि तत्परिभोगपराङ्मुखाः सत्यपि मणिकनकमौक्तिकादिके ममत्वाभिनिवेशरहिताः युगलक्षेत्रे विस्रसात एव शाल्यादीनि धान्यादीन्युपजायन्ते परं न ते मनुष्यादीनां परिभोगाय, दंशमशकयूकादयः चन्द्रसूर्योपरागादयश्च न भवन्तीति। तथा ते मनुष्याः 'णं' वाक्यालङ्कारे प्रकृत्या—स्वभावेन भद्रकाः परानुपतापहेतुकायवाङ्मनश्चेष्टाः प्रकृत्या—स्वभावेन न तु परोपदेशतः विनीताः—विनययुक्ताः प्रकृतिविनीताः प्रकृत्या उपशान्ताः प्रकृत्युपशान्ताः प्रकृत्यैव प्रतनवः—अतिमन्दीभूताः क्रोधमानमायालोभा येषां ते तथा, अत एव मृदु—मनोज्ञं परिणामसुखावहं यन्मार्दवं तेनसम्पन्नाः मृदुमार्दवसम्पन्नाः न कपटमार्दवोपेता इत्यर्थः, आ—समन्तात् सर्वासु क्रियासु लीना—गुप्ता आलीनाः—नोल्ब

णचेष्टाकारिण इत्यर्थः भद्रकाः—सकलतत्क्षेत्रोचितकल्याणभाविनः विनीताः—बृहत्पुरुषविनयकरणशीलाः अल्पेच्छाः—मणिकनकादिविषयप्रतिबन्धरहिताः अत एव 'असंनि०' न विद्यते सन्निधिरूपः सञ्चयो येषां ते तथा अचण्डा—न तीव्रकोपाः असिमषिकृषिवाणिज्यविवर्जिताः, तत्र अस्युपलक्षिताः सेवकाः पुरुषाः असयः मष्युपलक्षिता लेखनजीविनः मषयः कृषिरिति कृषिकर्मोपजीविनः, वाणिज्यमिति—वणिग्जनोचितवाणिज्यकलोपजीविनः एते न भवन्ति, तेषां सर्वेषां अहमिन्द्रत्वात् इति, 'विडिमान्तरेसु' कल्पद्रुमशाखान्तरेषु प्रासादाद्याकृतिषु निवसनं—आकालमावासो येषां ते विडिमान्तरनिवासिनः, ईप्सितान्—मनोवाञ्छितान् कामान्—शब्दादीन् कामयन्ते इत्येवंशीलाः ईप्सितकामकामिनः गेहाकारेषु—गृहसदृशेषु वृक्षेषु—कल्पद्रुमेषु कृतो—निष्पादितः निलयः—आवासः यैस्ते गेहाकारवृक्षकृतनिलयाः, गृहाकारकल्पवृक्षसूचनेनान्येऽपि सूचिता द्रष्टव्याः, यदुक्तं प्रवचनसारोद्धारवृत्तौ यथा—मत्ताङ्गदाः १ भृताङ्गाः २ त्रुटिताङ्गाः ३ दीपाङ्गाः ४ ज्योतिरङ्गाः ५ चित्राङ्गाः ६ चित्ररसाः ७ मण्यङ्गाः ८ गेहाकाराः ९ अनग्नाः १०, तत्र मत्ताङ्गदानां फलानि विशिष्टानि विशिष्टबलवीर्यकान्तिहेतुविस्रसापरिणतसरससुगन्धिविविधपरिपाकागतहृद्यमद्यपरिपूर्णानि स्फुटित्वा २ मद्यं मुञ्चन्तीति १, भृताङ्गाः यथेह मणिकनकरजतादिमयविचित्रभाजनानि दृश्यन्ते तथैव विस्रसापरिणतैः स्थालकच्चोलकंसकरकादिभिर्भाजनैरिव फलैरुपशोभमानाः प्रेक्ष्यन्ते २, त्रुटिताङ्गेषु सङ्गतानि सम्यग् यथोक्तरीत्या सम्बद्धानि त्रुटितानि—आतोद्यानि बहुप्रकाराणि ततविततघनशुषिरकाहलकादीनि ३, दीपाङ्गाः यथेह स्निग्धं प्रज्वलन्त्यः काञ्चनमय्यो दीपिका उद्योतं कुर्वाणा दृश्यन्ते तद्वत् दीपाङ्गाः विस्रसापरिणताः प्रकृष्टोद्द्योतेन सर्वमुद्यो-



तयन्तो वर्त्तन्ते ४, ज्योतिषिकाः सूर्यमण्डलमिव स्वतेजसा सर्वमपि भासयन्तः सन्तीति ५, चित्राङ्गेषु माल्यमनेकप्रकारसरससुरभिनानावर्णकुसुमदामरूपं भवति ६, चित्ररसाः भोजनार्थाय भवन्ति, कोऽर्थः?—विशिष्टदलिककलमशालिशालनकाः पक्वान्नप्रभृतिभ्योऽतीवापरिमितस्वादुतादिगुणोपेतेन्द्रियबलपुष्टिहेतुस्वादुभोज्यपदार्थपरिपूर्णैः फलमध्यैर्विराजमानाश्चित्ररसाः संतिष्ठन्ते इति ७ मण्यङ्गेषु वराणि भूषणानि विस्रसापरिणतानि कटककेयूरकुण्डलादीन्याभरणानि भवन्ति ८, गेहाकारनामकेषु कल्पद्रुमेषु विस्रसापरिणामत एव प्रांशुप्राकारोपगूढसुखारोहसोपानपङ्क्तिविचित्रचित्रशालोचितकान्तानि अनेकसमप्रकटापवरककुट्टिमतलाद्यलङ्कृतानि नानाविधानि निकेतनानि भवन्ति ९, अनग्नेषु कल्पपादपेषु अत्यर्थं बहुप्रकाराणि वस्त्राणि विस्रसात एवातिसूक्ष्मसुकुमारदेवदूष्यानुकाराणि मनोहारीणि निर्मलानि उपजायन्त इति १०। 'पुढविपुप्फे'ति पृथिवीपुष्पफलाहाराः पृथिवी पुष्पफलानि च कल्पद्रुमाणामाहारो येषां ते तथा, 'ते मणुयगणा' ते मनुजगणाः—युगलधार्मिकवृन्दाः 'णं' वाक्यालङ्कारे प्रज्ञप्ता जगदीश्वरैः, यदुक्तं जीवाभिगमवृत्तौ हे भगवन्! पृथिव्याः कीदृशः आस्वादः?, भगवानाह—हे गौतम! यथा गोक्षीरं चातुरक्यं—चतुःस्थानपरिणामपर्यन्तं, तच्चैवं—गवां पुण्ड्रदेशोद्भवेक्षुचारिणीनां अनातङ्कानां कृष्णानां यत्क्षीरं १ तदन्याभ्यः कृष्णगोभ्य एव यथोक्तगुणाभ्यः पानं दीयते २ तत्क्षीरमप्येवंभूताभ्योऽन्याभ्यः ३ तत्क्षीरमप्यन्याभ्यः ४ इति चतुःस्थानपरिणामपर्यन्तं, अन्ये त्वेवमाहुः—पुण्ड्रेक्षुचारिणीनां गवां लक्षस्य क्षीरमर्द्धार्द्धक्रमेण दीयते यावदेकस्याः क्षीरं तच्चातुरक्यमिति, एवंभूतं यच्चातुरक्यं गोक्षीरं खण्डगुडमत्स्यण्डिकोपनीतं मन्दाग्निक्वथितं, इतोऽपि पृथिव्याः आस्वादः इष्टतर इति, कल्पपादपसत्कानां पुष्पफलानां तु कीदृश आस्वादः?,

यथा चक्रवर्त्तिनः एकान्तसुखावहं भोजनं लक्षनिष्पन्नं शुभवर्णरसगन्धस्पर्शयुक्तं आस्वादनीयं अग्निवृद्धिकरं उत्साहवृद्धिकरं मन्मथजनकं, इतोऽपि चक्रवर्त्तिभोजनादिष्टतर एवास्वाद इति ।



**आसी य समणाउसो! पुव्विं मणुयाण छव्विहे संघयणे, तंजहा–वज्जरिसहनारायसंघयणे १ रिसहनारायसं० २ नाराय० ३ अद्धनारायसं० ४ कीलियसं० ५ छेवट्ठसंघयणे ६, संपइ खलु आउसो! मणुयाणं छेवट्ठे संघयणे वट्टइ आसी य आउसो! पुव्विं मणुयाणं छव्विहे संठाणे, तंजहा–समचउरंसे १ नग्गोहपरिमंडले २ सादि ३ खुज्जे ४ वामणे ५ हुंडे ६, संपइ खलु आउसो! मणुयाणं हुंडे संठाणं वट्टइ। (सू० १५) संघयणं संठाणं उच्चत्तं आउयं च मणुयाणं। अणुसमयं परिहायइ ओसप्पिणिकालदोसेणं ॥ १ ॥ (५०) कोहमयमायलोभा उस्सन्नं वड्ढए य मणुयाणं। कूडतुलकूडमाणा तेणऽणुमाणेण सव्वंति ॥ २ ॥ (५१) विसमा अज्ज तुलाओ विसमाणि य जणवएसु माणाणि। विसमा रायकुलाइं तेण उ विसमाइं वासाइं ॥ ३ ॥ (५२) विसमेसु य वासेसुं हुंति असाराइं ओसहिबलाइं। ओसहिदुब्बल्लेण य आउं परिहायइ नराणं ॥ ४ ॥ (५३) एवं परिहायमाणे लोए चंदुव्व कालपक्खम्मि। जे धम्मिया मणुस्सा सुजीवियं जीवियं तेसिं ॥ ५ ॥ (५४)**



तथा '**आसी य समणा**' आसन् हे श्रमण! हे गौतम! हे आयुष्मन्! पूर्वं मनुजानां षड्विधानि '**संघयणे**'त्ति संहननानि दृढदृढतरादयः शरीरबन्धा इत्यर्थः, तद्यथा–वज्रर्षभनाराचं १ ऋषभनाराचं २ नाराचं ३ अर्द्धनाराचं ४ कीलिका ५ सेवार्त्तं ६, वज्रादीनां कोऽर्थः?–ऋषभः–अस्थिद्वयस्यावेष्टकः पट्टः १ वज्रमिव वज्रं–कीलिका २ नाराचं–उभयतो मर्कटबन्धः ३ ततो द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीयेनास्थ्ना वेष्टितयोरुपरि तदस्थित्रयभेदि कीलिकाकारं वज्राख्यमस्थियन्त्रं तद्वज्रर्षभनाराचं १ कीलिकारहितं ऋषभनाराचं २ पट्टरहितं केवलमर्कटबन्धं नाराचं ३ यत्रैकपार्श्वे मर्कटबन्धोऽपरपार्श्वे च कीलिका तदर्धनाराचं ४ यत्रास्थीनि च कीलिकामात्रबद्धानि तत्कीलिकाख्यं ५ यत्र चास्थीनि परस्परपर्यन्तसंस्पर्शरूपसेवामात्रेण व्याप्तानि नित्यं स्नेहाभ्यङ्गादिपरिशीलनमपेक्षन्ते तत् सेवया ऋतं–व्याप्तं सेवार्त्तं ६, सम्प्रति–इदानीं पञ्चमारके खलु–निश्चये हे आयुष्मन्! मनुजानां सेवार्त्तं संहननं वर्त्तते, तत्र श्रीवीरात्सप्तत्यधिकशत १७० वर्षे श्रीस्थूलभद्रे स्वर्गं गते चरमाणि चत्वारि पूर्वाणि आद्यसंस्थानमाद्यसंहननं महाप्राणध्यानं च गतं, तथा श्रीवीरात् ५८४ वर्षे श्रीवज्रे दशमं पूर्वं संहननचतुष्कं च गतमिति। तथा आसन् हे आयुष्मन्! पूर्वं मनुजानां षड्विधानि '**संठाणे**'त्ति सन्तिष्ठन्ति प्राणिन एभिराकारविशेषैरिति संस्थानानि, तद्यथा–'**समचउरंसे**'त्ति समं–नाभेरुपर्यधश्च सकलपुरुषलक्षणोपेतावयवतया तुल्यं तच्च तच्चतुरस्रं च–अन्यूनाधिकाश्चतस्रोऽप्यस्रयो यस्य तत्समचतुरस्रं, अस्रयश्च पर्यङ्कासनोपविष्टस्य जानुनोरन्तरमासनस्य ललाटोपरिभागस्य चान्तरं दक्षिणस्कन्धवामजानुनोरन्तरं वामस्कन्धदक्षिणजानुनोश्चान्तरमिति संस्थानं–आकारः समचतुरस्रसंस्थानं १ न्यग्रोधवत् परिमण्डलं यस्य यथा न्यग्रोध उपरि सम्पूर्णप्रमाणोऽधस्तु हीनस्तथा यत् संस्थानं नाभेरुपरि सम्पूर्णमधस्तु न तथा तत् न्यग्रोधपरिमण्डलमुपरिविस्तारबहुलमिति भावः २ आदिरिहोत्सेधाख्यो नाभेरधस्तनो देहभागो गृह्यते ततः सह आदिना–नाभेरधस्तनभागेन यथोक्तप्रमा-

णलक्षणेन वर्त्तते इति सादि उत्सेधबहुलमिति भावः, इदमुक्तं भवति–यत् संस्थानं नाभेरधः प्रमाणोपपन्नमुपरि हीनं तत् सादीति ३ यत्र शिरोग्रीवाहस्तपादादिकं यथोक्तप्रमाणलक्षणोपेतं न पृष्ठ्युदरादि तत् कुब्जं ४ यत्र पुनरुरउदरपृष्ठ्यादिप्रमाणलक्षणोपेतं शिरोग्रीवाहस्तपादादिकं च हीनं तद् वामनं ५ यत्र तु सर्वेऽप्यवयवाः प्रमाणलक्षणपरिभ्रष्टास्तत् हुंडं ६, सम्प्रति खलु–निश्चये हे आयुष्मन्! मनुजानां हुण्डं संस्थानं वर्त्तते, अथोपदेशं ददातीत्याह–'संघयण०' संहननं संस्थानं शरीरादेरुच्चत्वम्–उच्छ्रयमानं आयुश्च मनुजानां चकारादन्येषां अपि अनुसमयं–समयं समयं प्रति परिहीयते अवसर्पिणीकालदोषेणेति ॥ १ ॥ 'कोहमा०' क्रोधमानमायालोभाश्च उस्सन्नं–प्रवाहेण वर्द्धन्ते–पूर्वमनुष्यापेक्षया विशेषतो वर्धन्ते, मनुष्याणां कूटतुलानि–कूटतोलनाद्युपकरणानि कूटमानानि–कूटकुडवप्रस्थादिमानानि च वर्द्धन्ते तेन कूटतुलादिनाऽनुमानेन–अनुसारेण 'सव्वं'ति क्रयाणकवाणिज्यादिकं कूटं वर्द्धते इति ॥ २ ॥ 'विस०' विषमाः अर्पणायान्याः ग्रहणायान्याश्च अद्य दुष्षमाकाले तुला तथा जनपदेषु–मगधादिदेशेषु मानानि–कुडवसेतिकादिप्रमाणानि विषमाणि–असमानि जातानि, चशब्दादनेकप्रकारवञ्चनानि, तथा विषमाणि–अनेकान्यायकारकाणि राजकुलानि वर्त्तन्ते, अथ तेन कारणेन तुशब्दोऽप्यर्थः वर्षाण्यपि–संवत्सराण्यपि विषमाणि–दुःखरूपाणि जातानीति ॥ ३ ॥ 'विसमे०' विषमेषु वर्षेषु सत्सु भवन्ति असाराणि–सारवर्जितानि औषधिबलानि–गोधूमादिवीर्याणि, औषधिदुर्बलत्वेन नराणामन्येषामपि आयुः–जीवितं परिहीयते–शीघ्रं क्षीयते इति ॥ ४ ॥ 'एवं' एवमुक्तप्रकारेण परिहीयमाने लोके कृष्णपक्षे चन्द्रवत् ये धार्मिकाः–धर्मयुक्ताः मनुष्यास्तेषां जीवितं–जीवितकालः सुजीवितं–सुष्ठु जीवितं ज्ञातव्यमिति ॥ ५ ॥

अथ शतवर्षायुःपुरुषस्य कियंतो युगायनादयो भवन्तीति दर्शयन्नाह–

**आउसो! से जहा नाम ए केइ पुरिसे ण्हाए कयबलिकम्मे कयकोऊयमंगलपायच्छित्ते सिरसि ण्हाए कंठेमालाकडे आविद्धमणिसुवन्ने अहयसुमहग्घवत्थपरिहिए चंदणोक्खिन्नगायसरीरे सरससुरहिगंधगोसीसचंदणाणुलित्तगत्ते सुइमालावन्नगविलेवणे कप्पियहारद्धहारतिसरयपालंबपलंबमाणे कडिसुत्तयसुकयसोहे पिणद्धगेविज्जअंगुलिज्जगललियंगयललियकयाभरणे नाणामणिकणगरयणकडगतुडियथंभियभुए अहियरूवसस्सिरीए कुंडलुज्जोवियाणणे मउडदिन्नसिरए हारुत्थयसुकयरइयवच्छे पालंबपलंबमाणसुकयपडउत्तरिज्जे मुद्दियापिंगलंगुलिए नाणामणिकणगरयणविमलमहरिहनिउणोवियमिसिमिसंतविरइयसुसिलिट्ठविसिट्ठलट्ठआविद्धवीरवलए, किं बहुणा? कप्परुक्खोविव अलंकियविभूसिए सुइपयए भवित्ता अम्मापियरो अभिवादयिज्जा ॥ तए णं तं पुरिसं अम्मापियरो एवं वइज्जा–जीव पुत्ता! वाससयंति, तंपियाइं तस्स नो बहुयं भवइ, कम्हा?, वाससयं जीवंतो वीसं जुगाइं जीवइ, वीसइं जुगाइं जीवंतो दो अयणसयाइं जीवइ, दो अयणसयाइं जीवंतो छ उउसयाइं जीवइ, छ उऊसयाइं जीवंतो बारस माससयाइं जीवइ, बारस माससयाइं जीवंतो चउवीसं पक्खसयाइं जीवइ, चउवीसं पक्खसयाइं जीवन्तो छत्तीसं राइंदियसहस्साइं जीवइ, छत्तीसं राइंदियसहस्साइं जीवंतो दस असीयाइं मुहुत्तसयसहस्साइं जीवइ, दस असीयाइं मुहुत्त-**

सयसहस्साइं जीवंतो चत्तारि उस्सासकोडीसए सत्त य कोडीओ अडयालीसं च सयसहस्साइं चत्तालीसं च सहस्साइं जीवइ, चत्तारि ऊसासकोडीसए जाव चत्तालीसं च ऊसाससहस्साइं जीवंतो अद्धतेवीसं तंडुलवाहे भुंजइ ॥ कहमाउसो! अद्धतेवीसं तंडुलवाहे भुंजइ ।, गोयमा! दुब्बलाए खंडियाणं बलियाए छडियाणं खयरमुसलपचाहयाणं ववगयतुसकणियाणं अखंडाणं अफुडियाणं फलगसरियाणं एक्केक्कबीयाणं अद्धतेरसपलियाणं पत्थएणं, सेवियणं पत्थए मागहए कल्लं पत्थो सायं पत्थो चउसट्ठी तंडुलसाहस्सीओ मागहओ पत्थओ बिसाहस्सिएणं कवलेणं बत्तीसं कवला पुरिसस्स आहारो अट्ठावीसं इत्थीयाए चउवीसं पंडगस्स, एवामेव आउसो! एयाए गणणाए दो असइओ पसई दो पसईओ सेइआ होइ चत्तारि सेइआ कुलओ चत्तारि कुलया पत्थो चत्तारि पत्था आढगं सट्ठीए आढयाण जहण्णए कुंभे असीइए आढयाणं मज्झिमे कुंभे आढयसयं उक्कोसए कुंभे अट्ठेव आढगसयाणि बाहो, एएणं बाहप्पमाणेणं अद्धतेवीसं तंडुलबाहे भुंजइ ॥

'आउसो! से जहा'० हे आयुष्मन्! स यथानामको–यत्प्रकारनामा देवदत्तादिनामेत्यर्थः, अथवा 'से' इति सः यथेति दृष्टान्तार्थः नामेति सम्भावनायां ए इति वाक्यालङ्कारे कश्चित् पुरुषः स्नातः–कृतस्नानः स्नानानन्तरं कृतं–निष्पादितं बलिकर्म–स्वगृहदेवतानां पूजा येन सः कृतबलिकर्म्मा, तथा कृतानि कौतुकमङ्गलान्येव प्रायश्चित्तार्थं–दुःस्वप्नादिविघातार्थमवश्यकरणीयत्वाद्येन स तथा, तत्र कौतुकानि–मषीतिलकादीनि मङ्गलानि तु–सिद्धार्थकदध्यक्षतदूर्वाङ्कुरादीनि, शिरसि–उत्तमाङ्गे स्नातः–कृतस्नानः, पूर्वं देशस्नानमुक्तमिह तु सर्वस्नानमिति न पौनरुक्त्यं, कण्ठे–ग्रीवायां 'मालकडे'त्ति कृता माला–पुष्पमाला येन स कृतमालः प्राकृतत्वात् 'मालकडे'त्ति, आविद्धानि–परिहितानि मणिसुवर्णानि येन स तथा, तत्र 'मणि'त्ति मणिमयानि भूषणानि एवं सुवर्णमयानीति, अहतं–मलमूषकादिभिरनुपहतं प्रत्यग्रमित्यर्थः सुमहार्घ्यं–बहुमूल्यं वस्त्रं परिहितं येन स तथा, चन्दनेन–श्रीखण्डेनोत्कीर्णं–चर्चितं गात्रं–शरीरं येन स तथा, सरसेन–रसयुक्तेन सुरभिगन्धेन–सुष्ठु गन्धयुक्तेन गोशीर्षचन्दनेन–हरिचन्दनेन 'अन्विति' अतिशयेन लिप्तं–विलेपनरूपं कृतं गात्रं–शरीरं यस्य स तथा, शुचिनी–पवित्रे माला–पुष्पमाला वर्णकं विलेपनं च–मण्डनकारि कुङ्कुमादिविलेपनं यस्य स तथा, कल्पितो–विन्यस्तो हारः–अष्टादशसरिकोऽर्धहारो–नवसरिकः त्रिसरकं–प्रतीतमेव यस्य स तथा, प्रालंबो–झुम्बनकं प्रलम्बमानो यस्य स तथा, कटिसूत्रेण–कट्याभरणविशेषेण सुष्ठु कृता शोभा यस्य स तथा, ततः पदत्रयस्य कर्मधारयः, अथवा कल्पितहारादिभिः सुष्ठु कृता शोभा यस्य स तथा, पिनद्धानि–परिहितानि ग्रैवेयकाङ्गुलीयकानि कण्ठकाख्योर्मिकाख्यानि येन स तथा, तथा 'ललियंगय'त्ति ललिताङ्गके–शोभमानशरीरे अन्यान्यपि ललितानि–शोभनानि कृतानि–न्यस्तानि आभरणानि–सारभूषणानि यस्य स तथा, ततः पदद्वयस्य कर्मधारयः, नानामणिकनकरत्नानां कटकत्रुटिकैः–हस्तबाह्वाभरणविशेषैः बहुत्वात् स्तम्भिताविव स्तम्भितौ भुजौ यस्य स तथा, अधिकरूपेण सश्रीकः–सशोभो यः स तथा, कुण्डलाभ्यां–कर्णाभरणाभ्यामुद्योतितं–उद्योतं प्रापितमाननं–मुखं यस्य स तथा, मुकुटदीप्तशिरस्कः, हारेणावस्तृतं–आच्छादितं तेनैव सुष्ठु कृतं रतिदं च वक्षः–उरो यस्यासौ हारावस्तृतसुकृतरतिदवक्षाः (क्षसः), प्रलम्बेन–दीर्घेण

प्रलम्बमानेन च सुष्ठु कृतं पटेन तु उत्तरीयं–उत्तरासङ्गो येन स तथा, मुद्रिकाः–अङ्गुल्याभरणानि ताभिः पिङ्गलाः–कपिला अङ्गुलयो यस्य स तथा, नानामणिकनकरत्नैर्विमलानि–विगतमलानि महार्हाणि–महार्घाणि निपुणेन शिल्पिना 'उविय'त्ति परिकर्मितानि 'मिसिमिसिंत'त्ति दीप्यमानानि यानि विरचितानि–निर्वृत्तानि सुश्लिष्टानि–सुसन्धीनि विशिष्टानि–अन्येभ्यो विशेषवन्ति लष्टानि–मनोहराणि आविद्धानि–परिहितानि वीरवलयानि येन स तथा, सुभटो हि यदि कश्चिदन्योऽप्यस्ति वीरव्रतधारी तदा असौ मां विजित्य मोचयत्वेतानि वलयानीति स्पर्धयन् यानि कटकानि परिदधाति तानि वीरवलयानीत्युच्यन्ते, किं बहुना वर्णितेनेति शेषः, कल्पवृक्ष इवालङ्कृतो दलादिभिर्विभूषितश्च फलादिभिः एवमसावपि मुकुटादिभिरलङ्कृतो विभूषितश्च भवति वस्त्रादिभिरिति, शुचिपदं–पवित्रस्थानमित्यर्थः, भूत्वा भूयः अम्बापितरौ–मातापितरावभिवादयते–पादयोः प्रणिपातं करोतीत्यर्थः। ततः–अभिवादनानन्तरं 'ण'मिति वाक्यालङ्कारे तं पुरुषं–स्वपुत्रलक्षणं मातापितरौ एवं वदेतां–कथयतां इत्यर्थः–हे पुत्र ! त्वं जीव वर्षशतमिति, अथ यदि तस्य पुत्रस्य वर्षशतप्रमाणमायुः स्यात् तदा स जीवति नान्यथेति, तदपि च आयुः 'आइं'ति अलङ्कारे तस्य–वर्षशतायुःपुरुषस्य न बहुकं–वर्षशताधिकं भवति, कस्मात् ?, यस्माद् वर्षशतं जीवन् विंशतियुगान्येव जीवति निरुपक्रमायुष्कत्वात्, तत्र युगं–चन्द्रादिवर्षपञ्चात्मकमिति १ विंशतियुगानि जीवन् पुरुषः द्वे अयनशते जीवति, तत्रायनं षण्मासात्मकमिति २ द्वे अयनशते जीवञ्जीवः षड् ऋतुशतानि जीवति, तत्रर्तुः मासद्वयात्मकः ३ षड् ऋतुशतानि जीवन् जन्तुर्द्वादश मासशतानि जीवति द्वादश मासशतानि जीवन् प्राणी चतुर्विंशतिपक्षशतानि जीवति २४०० चतुर्विंशतिपक्षशतानि जीवन् षट्त्रिंशदहो



रात्रसहस्राणि जीवति सत्त्वः ३६०००,६ षट्त्रिंशदहोरात्रसहस्राणि जीवन् असुमान् दश मुहूर्त्तलक्षाण्यशीतिमुहूर्त्तसहस्राणि १०८०००० ( च ) जीवति ७ दशलक्षमुहूर्त्ताण्यशीतिमुहूर्त्तसहस्राणि ( च ) जीवन् देहधारी चत्वार्युच्छ्वासकोटिशतानि सप्तकोटीः अष्टचत्वारिंशच्छतसहस्राणि चत्वारिंशत्सहस्राणि च जीवति देहभृत् ४०७४८४००००,८ चत्वार्युच्छ्वासकोटिशतानि यावच्चत्वारिंशदुच्छ्वाससहस्राणि जीवन् सार्धद्वाविंशतिं तन्दुलवाहान् वक्ष्यमाणस्वरूपान् भुनक्ति। कथम् ?–हे आयुष्मन् !–हे सिद्धार्थनन्दन ! सार्धद्वाविंशतितन्दुलवाहान् भुनक्ति संसारीति ?, हे गौतम ! दुर्बलिकया स्त्रिया खण्डितानां बलवत्या रामया छटितानां सूर्पादिना खदिरमुशलप्रत्याहतानामपगततुषकणिकानामखण्डानां–सम्पूर्णावयवानामस्फुटितानां–राजिरहितानां 'फलगसरियाणं'ति फलकविनीतानां कर्करादिकर्षणेनैकैकबीजानां वीननार्थं पृथक् पृथक्कृतानामित्यर्थः, एवंविधानां सार्धद्वादशपलानां तन्दुलानां प्रस्थको भवति, 'णं' वाक्यालङ्कारे, पलमानं यथा–पञ्चभिर्गुञ्जाभिर्माषः षोडशमाषैः कर्षः अशीतिगुञ्जाप्रमाण इत्यर्थः स यदि कनकस्य तदा सुवर्णसंज्ञः नान्यस्य रजतादेरिति, चतुर्भिः कर्षैः पलमिति विंशत्यधिकशतत्रयगुञ्जाप्रमाणमित्यर्थः ३२०, सोऽपि च प्रस्थकः मगधे भवो मागध इत्युच्यते, 'कल्लं'ति श्वः प्रातःकाल इत्यर्थः, प्रस्थो भवति भोजनायेति १ 'साय'मिति सन्ध्यायां प्रस्थो भोजनायेति २। एकस्मिन् मागधके प्रस्थके कति तन्दुला भवन्तीत्याह–'चउसट्ठि०' चतुःषष्टितन्दुलसाहस्रिको मागधः प्रस्थो भवत्येकः, एकः कवलः कतिभिः तन्दुलैः स्यादित्याह–'बिसाहस्सिएणं कवलेणं'ति द्विसाहस्रिकेण तन्दुलेन कवलो भवति, तत्र गुञ्जाः कति भवन्ति ?, यथा–एकविंशत्यधिकशतप्रमाणाः किञ्चिन्न्यूना एका गुञ्जा चेति, अनेन कवलमानेन पुरुषस्य द्वात्रिंशत्क-

वलरूप आहारो भवति १ स्त्रिया अष्टाविंशतिकवलरूप आहारः २ पण्डकस्य–नपुंसकस्य चतुर्विंशतिकवलरूप आहारः ३ 'एवामेव'त्ति उक्तप्रकारेण वक्ष्यमाणप्रकारेण च हे आयुष्मन्! एतया गणनया एतत्पूर्वोक्तं मानं भवति॥ अथासत्यादिमानपूर्वकमष्टाविंशतिसहस्राधिकलक्षतन्दुलमानं चतुःषष्टिकवलप्रमाणं एवंविधं प्रस्थद्वयं प्रतिदिनं भुञ्जन् शतवर्षेण कति तन्दुलवाहान् कति तन्दुलांश्च भुनक्तीत्याह–'दो असईउ पसई'इत्यादि, धान्यभृतोऽवाङ्मुखीकृतो हस्तोऽसतीत्युच्यते द्वाभ्यामसतीभ्यां प्रसृतिः १ द्वाभ्यां प्रसृतिभ्यां सेतिका भवति २ चतसृभिः सेतिकाभिः कुडवः ३ चतुर्भिः कुडवैः प्रस्थः ४ चतुर्भिः प्रस्थैराढकः ५ षष्ठ्याऽऽढकैर्जघन्यकुम्भः ६ अशीत्याऽऽढकैर्मध्यमकुम्भः ७ आढकशतेनोत्कृष्टः कुम्भः ८, अष्टभिराढकशतैर्वाहो भवति ९, अनेन वाहप्रमाणेन सार्धद्वाविंशतिं तन्दुलवाहान् भुनक्ति वर्षशतेनेति।

ते य गणियनिद्दिट्ठा–'चत्तारि य कोडिसया सट्ठिं चेव य हवंति कोडीओ। असीइं च तंदुलसयसहस्सा हवंतित्तिमक्खायं ४६०८००००००॥१॥५५॥तं एवं अद्धतेवीसं तंदुलवाहे भुंजंतो अद्धछट्ठे मुग्गकुंभे भुंजइ, अद्धछट्ठे मुग्गकुंभे भुंजंतो चउवीसं नेहाढगसयाइं भुंजइ, चउवीसं नेहाढगसयाइं भुंजंतो छत्तीसं लवणपलसहस्साइं भुंजइ, छत्तीसं लवणपलसहस्साइं भुंजंतो छप्पडगसाडगसयाइं नियंसेइ दोमासिएण परियट्टएणं मासिएण वा परियट्टेणं बारस पडसाडगसयाइं नियंसेइ, एवामेव आउसो! वाससयाउयस्स सव्वं गणियं तुलियं मवियं नेहलवणभोयणच्छायणंपि ॥ एयं गणियप्पमाणं दुविहं भणियं महरिसीहिं, जस्सत्थि तस्स गुणिज्जइ जस्स नत्थि तस्स किं गणिज्जइ? ॥

तांश्च वाहप्रमाणतन्दुलान् गणयित्वा–सङ्ख्यां कृत्वा निर्दिष्टाः–कथिताः,यथा–चत्वारि कोटिशतानि षष्टिश्चैव कोटयः अशीतिस्तन्दुलशतसहस्राणि भवन्तीत्याख्यातं–कथितं १, कथं, एकेन प्रस्थेन चतुःषष्टितन्दुलसहस्राणि भवन्ति, प्रस्थद्वयेनाष्टाविंशतिसहस्राधिकं लक्षं भवति, प्रतिदिनं द्विर्भोजनेन उक्तप्रमाणान् तन्दुलान् भुंक्ते इति, कथं अष्टाविंशतिसहस्राधिकलक्षं? वर्षशतस्य षट्त्रिंशद्दिनसहस्रमानत्वात् षट्त्रिंशत्सहस्रैर्गुण्यन्ते ४६०८ शून्यानि पञ्च भवन्ति, चत्वारि कोटिशतानि षष्टिः कोटयः अशीतिर्लक्षाणि तन्दुलानामिति। 'तं एवं'ति तदेवं सार्धद्वाविंशतिं तन्दुलवाहान् भुञ्जानः सार्धपञ्चमुद्गकुम्भान् भुंक्ते सार्धपञ्चं मुद्गकुंभान् भुञ्जन् चतुर्विंशतिं स्नेहाढकशतानि भुंक्ते चतुर्विंशतिस्नेहाढकशतानि भुञ्जन् षट्त्रिंशल्लवणपलसहस्राणि भुनक्ति, षट्त्रिंशल्लवणपलसहस्राणि भुञ्जन् षट् पट्टकशाटकशतानि 'नियंसेइ'त्ति परिदधाति, द्वाभ्यां मासाभ्यां 'परियट्टएणं'ति परावर्त्तमानत्वेनेति वा अथवा मासिकेन परावर्त्तनेन द्वादश पट्टशाटकशतानि 'नियंसेइ'त्ति परिदधाति,'एवामेवे'ति उक्तप्रकारेण हे आयुष्मन्! वर्षशतायुषः पुरुषस्य सर्वं गणितं तन्दुलप्रमाणादिना तुलितं पलप्रमाणादिना मवितमसतिप्रसृत्यादिना प्रमाणेन, तत् किमित्याह?–स्नेहलवणभोजनाच्छादनमिति। एतत् पूर्वोक्तं गणितप्रमाणं द्विधा भणितं महर्षिभिः, यस्य जन्तोरस्ति तन्दुलादिकं तस्य गुण्यते, यस्य तु नास्ति तस्य किं गुण्यते?, न किमपीति।

ववहारगणियदिट्ठं सुहुमं निच्छयगयं मुणेयव्वं। जइ एयं नवि एयं विसमा गणणा मुणेयव्वा ॥ १ ॥ (५६) कालो परमनिरुद्धो अविभज्जो तं तु जाण समयं तु। समया य असंखिज्जा हवंति उस्सासनिस्सासे ॥ २ ॥ (५७) हट्ठस्स अणवगल्लस्स, निरुवकिट्ठस्स जंतुणो। एगे ऊसासनीसासे, एस पाणुत्ति

वुचइ ॥ ३ ॥ (५८) सत्त पाणूणि से थोवे, सत्त थोवाणि से लवे। लवाणं सत्तहत्तरीए, एस मुहुत्ते वियाहिए ॥ ४ ॥ (५९) एगमेगस्स णं भंते! मुहुत्तस्स केवइया ऊसासा वियाहिया?, गोयमा!-तिन्नि सहस्सा सत्त य सयाण तेवत्तरिं च ऊसासा। एस मुहुत्तो भणिओ सव्वेहिं अणंतनाणीहिं ॥ ५ ॥ (६०) दो नालिया मुहुत्तो सट्ठिं पुण नालिया अहोरत्तो। पन्नरस अहोरत्ता पक्खो पक्खा दुवे मासो ॥ ६ ॥ (६१) दाडिमपुप्फागारा लोहमई नालिया उ कायव्वा। तीसे तलंमि छिद्दं छिद्दपमाणं पुणो वुच्छं ॥ ७ ॥ (६२) छन्नउइपुच्छवाला तिवासजायाएँ गोतिहाणीए। असंवलिया उज्जा य नायव्वं नालियाछिद्दं ॥ ८ ॥ (६३) अहवा उ पुच्छवाला दुवासजायाएँ गयकरेणूए। दो वाला अब्भग्गा नायव्वं नालियाछिद्दं ॥ ९ ॥ (६४) अहवा सुवन्नमासा चत्तारि सुवट्टिया घणा सूई। चउरंगुलप्पमाणा नायव्वं नालियाच्छिद्दं ॥ १० ॥ (६५) उदगस्स नालियाए हवंति दो आढयाओ परिमाणं। उदगं च भाणियव्वं जारिसयं तं पुणो वुच्छं ॥ ११ ॥ (६६) उदगं खलु नायव्वं कायव्वं दूसपट्टपरिपूयं। मेहोदगं पसन्नं सारइयं वा गिरिनईए ॥ १२ ॥ (६७) बारस मासा संवच्छरो य पक्खाउ ते उ चउवीसं। तिन्नेव य सट्ठिसया हवंति राइंदियाणं च ॥ १३ ॥ (६८) एगं च सयसहस्सं तेरस चेव य भवे सहस्साइं। एगं च सयं नउयं हुंति अहोरत्त ऊसासा ॥ १४ ॥ (६९) तित्तीस सयसहस्सा पंचाणउई भवे सहस्साइं। सत्त य सया अणूणा हवंति मासेण ऊसासा ॥ १५ ॥ (७०) चत्तारि य कोडीओ सत्तेव य हुंति सयसहस्साइं। अडयालीससहस्सा चत्तारि सया य वरिसेण ॥ १६ ॥



(७१) चत्तारि य कोडिसया सत्त य कोडिओ हुंति अवराओ। अडयाल सयसहस्सा चत्तालीसं सहस्साइं ॥ १७ ॥ (७२) वाससयाउस्सेए उस्सासा इत्तिया मुणेयव्वा। पिच्छह आउस्स खयं अहोनिसं झिज्झमाणस्स ॥ १८ ॥ (७३) राइंदिएण तीसं तु मुहुत्ता नव सयाइं मासेणं। हायंति पमत्ताणं न य णं अबुहा वियाणंति ॥ १९ ॥ (७४) तिन्नि सहस्से सगले छच सए उडुवरो हरइ आउं। हेमन्ते गिम्हासु य वासासु य होइ नायव्वं ॥ २० ॥ (७५) वाससयं परमाऊ इत्तो पन्नास हरइ निद्दाए। इत्तो वीसइ हावइ बालत्ते वुड्ढभावे य ॥ २१ ॥ (७६) सीउण्हपंथगमणे खुहापिवासा भयं च सोगे य। नाणाविहा य रोगा हवंति तीसाइ पच्छद्धे ॥ २२ ॥ (७७) एवं पंचासीई नट्ठा पण्णरसमेव जीवंति। जे हुंति वाससइया न य सुलहा वाससयजीवा ॥ २३ ॥ (७८) एवं निस्सारे माणुसत्तणे जीविए अहिवडंते। न करेह चरणधम्मं पच्छा पच्छाणुतावेहा ॥ २४ ॥ (७९) घुट्ठंमि सयं मोहे जिणेहिं वरधम्मतित्थमग्गस्स। अत्ताणं च न याणह इह जाया कम्मभूमीए ॥ २५ ॥ (८०) नइवेगसमं चंचलं जीवियं जुव्वणं च कुसुमसमं। सुक्खं च जमनियत्तं तिन्निवि तुरमाणभुज्जाइं ॥ २६ ॥ (८१) एयं खु जरामरणं परिक्खिवइ वग्गुरा व मयजूहं। न य णं पिच्छह पत्तं संमूढा मोहजालेणं ॥ २७ ॥ (८२)

'ववहार'गाथा, व्यवहारगणितं एतद् दृष्टं-स्थूलन्यायमङ्गीकृत्य कथितं मुनिभिः सूक्ष्मं-सूक्ष्मगणितं निश्चयगतं ज्ञातव्यं, यद्येतन्निश्चयगतं भवति तदैतद् व्यवहारगणितं नास्त्येव, अतो विषमा गणना ज्ञातव्येति ॥ १ ॥ अथ पूर्वोक्तं समयादि-

स्वरूपमाह–'कालो' यः कालः परमनिरुद्धः–अत्यन्तसूक्ष्मः अविभाज्यो–विभागीकर्त्तुमशक्यस्तमेव कालं–समयं जानीहि त्वं, चशब्दादसङ्ख्यसमयात्मिकाऽऽवलिकाऽपि ज्ञेया, एकस्मिन्निःश्वासोच्छ्वासेऽसङ्ख्येयाः समया भवन्ति ॥ २ ॥ 'हट्ठ०' हृष्टस्य–समर्थस्य 'अणवगल्लस्से'ति रोगरहितस्य 'निरुवकिट्ठस्से'ति क्लेशरहितस्य जन्तोः–जीवस्यैको निःश्वासोच्छ्वासः एषः प्राण इत्युच्यते इति ॥ ३ ॥ 'सत्त०' सप्तभिः प्राणैः स स्तोकः कथ्यते, सप्तभिः स्तोकैः स लवः कथ्यते, लवानां सप्तसप्तत्या एष मुहूर्त्तो व्याख्यातः ॥४॥ 'एगमे०' एकैकस्य हे भदन्त ! मुहूर्त्तस्य कियन्त उच्छ्वासा व्याख्याताः ?, हे गौतम ! 'तिन्नि'गाहा, त्रिभिः सहस्रैः सप्तभिः शतैः त्रिसप्तत्योच्छ्वासैः ३७७३ एष मुहूर्त्तो भणितः सर्वैरनन्तज्ञानिभिः ॥ ५ ॥ 'दो नालि०' द्वाभ्यां नालिकाभ्यां–घटिकाभ्यां मुहूर्त्तः स्यात्, षष्ट्या नालिकाभिरहोरात्रः, पञ्चदशभिरहोरात्रैः पक्षः, द्वाभ्यां पक्षाभ्यां मास इति भावार्थः ॥ ६ ॥ अथ उक्तनालिकायाः–स्वरूपमाह–दाडिमे'ति दाडिमपुष्पाकारा लोहमयी नालिका–घटिका कर्त्तव्या भवति, तस्या नालिकायास्तले–अधोभागे छिद्रं–रन्ध्रं कृतं भवति, छिद्रप्रमाणं पुनः वक्ष्ये शिष्यज्ञानायेति ॥ ७ ॥ 'छन्न'त्ति षण्णवतिपुच्छवाला–लाङ्गुलकेशाः, कस्याः–'गोतिहाणीए'त्ति गोवच्छिकायाः, किंभूतायाः ?–'तिवासजायाए'त्ति त्रिवर्षजातायाः, जन्मतो वर्षत्रयाणि जातानीत्यर्थः, किंभूताः केशाः ?–असंवलिताः न खितानखिटिकाकारा जाताः, अत एव ऋजुकाः–सरलाः एषां वालानां घनमेकीभूतानां यादृशं प्रमाणं भवति तादृशं नालिकाच्छिद्रं ज्ञातव्यमिति ॥ ८ ॥ 'अहवा' अथवा पुच्छवालौ द्वौ, कस्याः ?–'गयकरेणूए'त्ति गजकलभिकायाः, किंभूताया ?–द्विवर्षजातायाः, किंभूतौ वालौ ?–अभग्नौ, अनेन वालद्वयमानेन नालिकाच्छिद्रं ज्ञातव्यमिति ॥ ९ ॥ 'अह-



वा सु०' अथवा चतुर्णां स्वर्णमाषाणां सूचिर्भवति, किंभूता सूचिः ?–सु–अतिशयेन वर्त्तिता–वर्त्तुलीकृता सुवर्त्तिता घना–निबिडा चतुरङ्गुलप्रमाणा, तत्र माषमानं पञ्चगुञ्जाप्रमाणमित्युक्तप्रमाणेन नालिकाच्छिद्रं ज्ञातव्यमिति ॥ १० ॥ इत्युक्तं घटिकाच्छिद्रप्रमाणम् । अथ घट्यां जलप्रमाणमाह–'उदगस्स०'नालिकायां–घटिकायामुदकस्य–जलस्य प्रमाणं द्वावाढकौ भवतः, उदकं यादृशं भणितव्यं भवति तत्तादृशं पुनर्वक्ष्ये इति ॥ १ ॥ 'जारिसयं' तं उदकं–जलं खलु–निश्चये ज्ञातव्यं कर्त्तव्यं चेति, कीदृशं कर्त्तव्यमित्याह–'दूसपट्ट०' दूष्यपरिपूतं,वस्त्रगलितमित्यर्थः, मेघोदकं प्रसन्नमिति निर्मलं,वा–अथवा 'सारय'ति शरत्कालोद्भवं आश्विनकार्त्तिकोद्भवं यद् गिरिनद्या उदकं ज्ञातव्यं,तच्च स्वभावेन निर्मलं भवतीति ॥ १२ ॥ 'बारस'द्वादशभिर्मासैः संवत्सरस्तस्मिन्संवत्सरे चतुर्विंशतिः पक्षा भवन्ति,तेषु षष्ट्याऽधिकानि त्रीणि शतानि अहोरात्राणि भवन्ति ॥१३॥ 'एगं च' एकं शतसहस्रं–लक्षं त्रयोदश सहस्राणि नवत्यधिकं शतं चाहोरात्रेणैतावन्त उच्छ्वासा भवन्ति ११३१९० इति ॥१४॥ 'तित्तिस०'त्रयस्त्रिंशच्छतसहस्राणि लक्षाणि पञ्चनवतिः सहस्राणि सप्तशतान्यन्यूनान्येतावन्तो मासेनोच्छ्वासा भवन्ति ३३९५७००, इति ॥१५॥ 'चत्तारि०' चतस्रः कोट्यः सप्त लक्षाणि अष्टचत्वारिंशत् सहस्राणि चत्वारि शतानि च ४०७४८४००, इयन्तः वर्षेणोच्छ्वासा भवन्ति ॥ १६ ॥ 'चत्ता०' । 'वासस०' । चत्वारि कोटिशतानि सप्तकोट्यः अपराण्यष्टचत्वारिंशच्छतसहस्राणि चत्वारिंशत्सहस्राणि च ४०७ ४८४०००० ॥१७॥ वर्षशतायुषः एते पूर्वोक्ता उच्छ्वासाः 'इत्तिय'त्ति इयन्तो ज्ञातव्या इति, भो भव्याः ! यूयं पश्यत–ज्ञानचक्षुषा विलोकयत आयुषः क्षयमहोरात्रं क्षीयमाणस्य–समये २ आवीचीमरणेन त्रुट्यमानस्येति॥१८॥'राइ०' अहोरात्रेण त्रिंशन्मुहूर्त्ता भवन्ति,मासेन नव शतानि

मुहूर्त्तानि, तानि प्रमत्तानां-मद्यादिप्रमादयुक्तानां सुभूमब्रह्मदत्तादीनामिव हीयन्ते, न चाबुधा-मूर्खा विजानन्तीति ॥ १९ ॥ 'तिन्नि०' त्रीणि सहस्राणि षट्शताधिकानि सकलानि-सम्पूर्णानि मूहूर्तानि हेमन्ते-शीतकाले भवन्ति, एतत्प्रमाणमायुर्जीवानां हेमन्ते उडुवरः-सूर्यो हरति, एवं ग्रीष्मे वर्षासु च ज्ञातव्यं भवति, अत्र आर्षत्वेन ग्रीष्मशब्दः स्त्रीलिङ्गो बहुवचनान्तश्च, वर्षशब्दस्तु आबन्तत्वेन स्त्रीलिङ्गो बहुवचनान्तश्च ॥ २० ॥ 'वासस०' साम्प्रतं जीवानां परमायुः-उत्कृष्टंजीवितं वर्षशतं प्रवाहेण ज्ञातव्यम्, इतो-वर्षशतात् पञ्चाशद् वर्षाणि निद्रया हरति-गमयति जीवः, इतः-शेषपञ्चाशद्वर्षतः विंशतिर्वर्षाणि हीयन्ते-यान्ति प्रमादादिना, कथं ?, बालत्वे दशकं वृद्धत्वे च दशकं चेति ॥ २१ ॥ 'सीउ०' शीतोष्णपथगमनानि तथा क्षुत्पिपासा भयं च शोकश्च नानाविधा रोगाश्च भवन्ति, त्रिंशतः पश्चार्धे त्रिंशत्पश्चार्धे पञ्चदशवर्षरूपं तस्मिन्, को भावः ?-शेषत्रिंशतो मध्यात् पञ्चदश वर्षाणि जीवानां शीतोष्णपथगमनादिभिर्मुधा यान्तीति ॥ २२ ॥ 'एवं०' पूर्वोक्तप्रकारेण पञ्चाशीतिवर्षाणि नष्टानि, धर्मं विना विकथानिद्रालस्यवतां मुधा गतानि, कथं ?-निद्रया पञ्चाशद् वर्षाणि ५० बालत्वे दश १० वृद्धभावे दश १० शीतादिभिः पञ्चदश १५, एवं सर्वाणि ८५ इति, ये जीवाः वर्षशतिकाः-वर्षशतप्रमाणा भवन्ति ते जीवाः पञ्चदश वर्षाणि जीवन्ति, अन्येषां वर्षाणां धर्मत्वेनामृतप्रायत्वात्, न च वर्षशतजीविनो जीवाः प्रायः सुलभाः, दुष्प्रापा इत्यर्थः, उक्तं च-'आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं, तस्यार्धस्य परस्य चार्धमपरं बाल्ये च वृद्धे गतम्। शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते, जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ! ॥ १ ॥ २३ ॥ 'एवं०' एवमुक्तप्रकारेण निःसारे-असारे मानुषत्वे-



मनुजत्वे तथा जीविते-आयुषि रत्नकोटिकोटिभिरप्यप्राप्येऽधिपतति-समये २ क्षयं गच्छति सतीत्यर्थः न कुरुत यूयं चरणधर्म-ज्ञानदर्शनपूर्वकं देशसर्वचारित्रं, हा इति महाखेदे, पश्चाद्-आयुःक्षयानन्तरमायुःक्षयचरमक्षणे वा पश्चात्तापं-कायवाङ्मनोभिर्महाखेदं करिष्यथ नरकस्थशशिराजवदिति ॥ २४ ॥ भव्याः प्रश्नयन्ति-कथं वयं नात्मस्वरूपं जानीम इत्युक्ते गुरुराह'-'घुट्टंमि०' धर्मस्य जिनोक्तरूपस्य तीर्थ-पवित्रकरणस्थानकं तस्य मार्गो ज्ञानदर्शनचारित्ररूपः वरश्चासौ धर्मतीर्थमार्गश्च स तथा तस्मिन्, प्राकृतत्वात् विभक्तिपरिणामः, जिनैः-रागादिजेतृभिः स्वयं-आत्मना 'घुट्टंमी'ति कथिते-निरूपिते सति, आत्मानं न यूयं जानीत, क्व सति ?-मोहे सति-तीव्रमिथ्यात्वमिश्रमोहनीयकर्मोदये सतीत्यर्थः, इह कर्मभूमौ जाता अपि, अपेर्गम्यमानत्वादिति, अस्या अर्थो अन्योऽपि सद्गुरुप्रसादात्कार्यः इति ॥ २५ ॥ 'नइ०' नदीवेगसमं चपलं जीवितं-आयुः १ यौवनं कुसुमसमं-पुष्पसदृशं क्षणेन म्लानत्वापत्तेः २ च पुनः यत्सौख्यं तत् 'अनियत्तं'ति अनित्यं ३, एतानि त्रीण्यपि 'तुरमाणभुञ्जाइं'ति शीघ्रं भोग्यानि 'भज्जा'इति पाठे तु शीघ्रं भग्नयोग्यानि शीघ्रं भङ्क्त्वा यान्तीत्यर्थः ॥ २६ ॥ 'एयं०' एतज्जरामरणं 'खु' निश्चये जीवलोकं परिक्षिपति-परिवेष्टयति, (व)इवार्थे, यथा वागुरा मृगयूथं परिक्षिपति, न च पश्यत यूयं प्राप्तं जरामरणं मोहजालेन सम्मूढाः-मोहं गताः, श्रीगौतमप्रतिबोधितदेवशर्मद्विजवदिति ॥ २७ ॥ उक्तमायुष्कापेक्षयाऽनित्यत्वं, अथ शरीरापेक्षया दर्शयन्नाह—

**आउसो ! जंपिय इमं सरीरं इट्ठं कंतं पियं मणुन्नं मणामं मणभिरामं थिज्जं वेसासियं संमयं बहुमयं अणुमयं भंडकरंडगसमाणं रयणकरंडओविव सुसंगोवियं चेलपेडाविव सुसंपरिवुडं तिल्लपेडाविव सुसंगो-**

वियं मा णं उण्हं मा णं सीयं मा णं वाला मा णं खुहा मा णं पिवासा मा णं चोरा मा णं दंसा मा णं मसगा मा णं वाइ यपित्तियसंभियसंनिवाइयविविहा रोगायंका फुसंतुत्तिकट्टु एवंपियाइं अधुवं अनिययं असासयं चयावचइयं विप्पणासधम्मं पच्छा व पुरा व अवस्सविप्पचइयव्वं ॥ एअस्सवियाइं आउसो ! अणुपुव्वेणं अट्ठारस्स य पिट्ठकरंडगसंधिओ बारस पंसलिया करंडा छप्पंसुलिए कडाहे बिहत्थिया कुच्छी चउरंगुलिया गीवा चउपलिया जिब्भा दुपलियाणि अच्छीणि चउकवालं सिरं बत्तीसं दंता सत्तंगुलिया जीहा अद्धुट्टपलियं हिययं पणवीसं पलाइं कालिज्जं दो अंता पंचवामा पण्णत्ता, तंजहा–थूलंते य १ तणुयंते य २, तत्थ णं जे से थूलंते तेण उच्चारे परिणमइ, तत्थ णं जे से तणुयंते तेणं पासवणे परिणमइ, दो पासा पण्णत्ता, तंजहा–वामे पासे दाहिणपासे य, तत्थ णं जे से वामे पासे से सुहपरिणामे, तत्थ णं जे से दाहिणे पासे से दुहपरिणामे ॥ आउसो ! इमंमि सरीरए सट्ठि संधिसयं सत्तुत्तरं मम्मसयं तिन्नि अट्ठिदामसयाइं नव ण्हारुसयाइं सत्त सिरासयाइं पंच पेसीसयाइं नव धमणीओ नवनउइं च रोमकूवसयसहस्साइं विणा केसमंसुणा सह केसमंसुणा अद्धुट्ठाओ रोमकूवकोडीओ। आउसो ! इमंमि सरीरए सट्ठी सिरासयं नाभिप्पभवाणं उड्ढगामिणीणं सिरमुवगयाणं जाओ ? रसहरणीओत्ति वुच्चन्ति जाणंसि निरुवघाएणं चक्खुसोयघाणजीहाबलं च भवइ, जाणं सि उवघाएणं चक्खुसोयघाणजीहाबलं उवहम्मइ ॥ आउसो ! इमंमि सरीरए सट्ठिसिरासयं नाभिप्प-





भवाणं अहोगामिणीणं पायतलमुवगयाणं जाणं सि निरुवघाएणं जंघाबलं भवइ, ताणं चेव से उवघाएणं सीसवेयणा अद्धसीसवेयणा मत्थयसूले अच्छीणि अंधिज्जंति । ( सूत्रं २४ ) आउसो ! इमंमि सरीरए सट्ठिसिरासयं नाभिप्पभवाणं तिरियगामिणीणं हत्थतलमुवगयाणं जाणं सि निरुवघाएणं बाहुबलं हवइ, ताणं चेव से उवग्घाएणं पासवेयणा पुट्ठिवेयणा कुच्छिवेयणा कुच्छिसूले हवइ ॥ आउसो ! इमस्स जंतुस्स सट्ठिसिरासयं नाभिप्पभवाणां अहोगामिणीणं गुदप्पविट्ठाणं जाणं सि निरुवघाएणं मुत्तपुरीसवाउकम्मं पवत्तइ, ताणं चेव उवघाएणं मुत्तपुरीसवाउनिरोहेणं अरिसा खुब्भंतिपंडु रोगो भवइ आउसो ! इमस्स जंतुस्स पणवीसं सिराओ पित्तधारिणीओ पणवीसं सिराओ सिंभधारिणीओ दस सिराओ सुक्कधारिणीओ सत्त सिरासयाइं पुरिसस्स तीसूणाइं इत्थियाए वीसूणाइं पंडगस्स आउसो ! इमस्स जतुस्स रुहिरस्स आढयं वसाए अद्धाढयं मत्थुलुंगस्स पत्थो मुत्तस्स आढयं पुरिसस्स पत्थो पित्तस्स कुडवो सिंभस्स कुडवो सुक्कस्स अद्धकुडवो, जं जाहे दुट्ठं भवइ तं ताहे अइप्प माणं भवइ, पञ्चकोट्ठे पुरिसे छकोट्ठा इत्थिया नवसोए पुरिसे इक्कारससोया इत्थिया, पञ्च पेसीसयाइं पुरिसस्स तीसूणाइं इत्थियाए वीसूणाइं पंडगस्स ( सूत्रं १६ )

'आउसो जं०' इत्याद्यालापकरूपं सूत्रं, हे आयुष्मन् ! यदपिच इदं शरीरं–वपुः इष्टं इच्छाविषयत्वात् कान्तं कमनीयत्वात् प्रियं प्रेमनिबन्धनत्वात् मनसा ज्ञायते–उपादीयत इति मनोज्ञं मनसा अम्यते–गम्यते इति मनोऽमं

**मनसोऽभिरामं मनोऽभिरामं सनत्कुमारचक्रिवत्** स्थैर्यं–स्थैर्यगुणयोगात् वैश्वासिकं–विश्वासस्थानं संमतं तत्कृतकार्याणां संमतत्वात् बहुमतं बहुष्वपि कार्येषु बहुर्वाऽनल्पतया–अस्तोकतया मतं बहुमतं अनु–विप्रियकरणात् पश्चान्मतमनुमतं भाण्डकरण्डकसमानं–आभरणभाजनतुल्यमादेयमित्यर्थः रत्नकरण्डक इव सुसंगोपितं वस्त्रादिभिः चेलपेटेव–वस्त्रमञ्जूषेव सुष्ठु संपरिवृतं–निरुपद्रवे स्थाने निवेशितं, गृहस्थावस्थास्थशालिभद्रवपुर्वत्, तैलपेटेव–तैलगोलिकेव सुसंगोपितं भङ्गभयात्, 'तेल्लकेला इव सुसंगोविय'त्ति पाठान्तरं तैलकेला–तैलाश्रयो भाजनविशेषः सौराष्ट्रप्रसिद्धः सा च सुष्ठु सङ्गोप्या–सङ्गोपनीया भवति अन्यथा लुठति ततश्च तैलहानिः स्यादिति, **'मा णं०'** माशब्दो निषेधार्थः **'णं'** वाक्यालङ्कारे अथवा **'मा णं'**ति मा इदं शरीरमिति व्याख्येयं, ततः सर्वेऽप्युष्णादयो मा स्पृशन्तु **'छुयंतु'** भवन्त्वित्यर्थः, **'तिकट्टु'** इतिकृत्वा, अथवेत्यभिसन्धाय पालितमिति शेषः, तत्रोष्मत्वं–ग्रीष्मादावुष्णत्वं शीतं–शीतकाले शीतत्वं व्यालाः–श्वापदाः सर्पा वा क्षुद्–बुभुक्षा पिपासा–तृषा चौराः–निशाचराः दंशाः मशकाः एते विकलेन्द्रियजन्तुविशेषाः वातिकपैत्तिकश्लेष्मिकसान्निपातिका विविधरोगातङ्काः रोगाः–कालसहा व्याधयः आतङ्काः–त एव सद्योघातिनः **'एवंपि याइं'न्ति** एव-मुक्तप्रकारेण अपिचेत्यभ्युच्चये **'आइं'**इति वाक्यालङ्कारे, इदं शरीरं न ध्रुवमध्रुवं सूर्योदयवत् न प्रतिनियतकालेऽवश्यंभावि अनियतं–सुरूपादेरपि कुरूपादिदर्शनात् हरितिलकराजसुतविक्रमकुमारशरीरवत् अशाश्वतं–क्षणं क्षणं प्रति विनश्वरत्वात् सनत्कुमारशरीरवत् **'चयावचइयं'**ति इष्टाहारोपभोगतया धृत्युपष्टम्भादौदारिकवर्गणापरमाणूपचयाच्चयस्तदभावे तद्विघटनादपचयः चयापचयौ विद्येते यस्य तच्चयापचयिकं पुष्टिगलनस्वभावमित्यर्थः, **करकंडुप्रत्येकबुद्धवैराग्यहेतु-**



वृषभशरीरवत्, विप्रणाशो–विनश्वरो धर्मः–स्वभावो यस्य तद् विप्रणाशधर्मं, **'पच्छा व'**त्ति पश्चाद् विवक्षितकालात् परतः **'पुरा व'**त्ति विवक्षितकालात् पूर्वं च, यद्वा **'पच्छा पुरा य'**त्ति पाठे तु विवक्षितकालस्य पश्चात्पूर्वं च सर्वदैवेत्यर्थः, अवश्यं **'विप्पचइयव्वं'**ति विप्रत्यक्तव्यं त्याज्यमित्यर्थः । **'एयस्सवि याइं'**ति एतस्य एतस्मिन्नपि च वा वपुषः वपुषि वा **'आइं'**ति वाक्यालङ्कारे **'आउसो'**त्ति हे आयुष्मन्! आनुपूर्व्या–अनुक्रमेणाष्टादश पृष्ठिकरण्डकस्य–पृष्ठिवंशस्य सन्धयो-ग्रन्थिरूपा भवन्ति, यथा वंशस्य पर्वाणि, तेषु चाष्टादशसु सन्धिषु मध्ये द्वादशभ्यः सन्धिभ्यो द्वादश पांशुलिकाः निर्गत्योभयपार्श्वावावृत्य वक्षःस्थलमध्योर्ध्ववर्त्यस्थिनि लगित्वा पल्लकाकारतया परिणमन्ति, अत आह–**'बारस०'** शरीरे द्वादश पांशुलिकारूपाः करण्डकाः–वंशका भवन्ति, तथा **'छप्पंसु०'** तस्मिन्नेव पृष्ठिवंशे शेषषट्सन्धिभ्यः षट् पांशुलिका निर्गत्य पार्श्वद्वयमावृत्य हृदयस्योभयतो वक्षःपञ्जरादधस्तात् शिथिलकुक्षेस्तूपरिष्टात्परस्परासंमिलितास्तिष्ठन्ति, अयं च कटाह इत्युच्यते, द्वे वितस्ती कुक्षिर्भवति, चतुरङ्गुलप्रमाणा ग्रीवा भवति, तौल्येन मगधदेशप्रसिद्धपलेन चत्वारि पलानि जिह्वा भवति, अक्षिमांसगोलकौ द्वे पले भवतः, चतुर्भिः कपालैः–अस्थिखण्डरूपैः शिरो भवति, मुखेऽशुचिपूर्णे प्रायो द्वात्रिंशद्दन्ता अस्थिखण्डानि भवन्ति, **'सत्तंगु०'** जिह्वा–मुखाभ्यन्तरवर्तिमांसखण्डरूपा दैर्घ्येणात्माङ्गुलतः सप्ताङ्गुला भवति **'अद्धुट्ठ०'** हृदयान्तरवर्ति मांसखण्डं सार्धपलत्रयं भवति, **'पणवी० कालिज्जं'** वक्षोऽन्तर्गूढमांसविशेषरूपं पञ्चविंशतिः पलानि स्युः, द्वे अन्त्रे प्रत्येकं पञ्चपञ्चवामप्रमाणे प्रज्ञप्ते जिनैः, तद्यथा–स्थूलान्त्रं १ तन्वन्त्रं २, तत्र यत् तत् स्थूलान्त्रं तेनोच्चारः परिणमति, तत्र च यत्तन्वन्त्रं तेन प्रस्रवणं–मूत्रं परिणमति, **'दो पा०'** द्वे पार्श्वे प्रज्ञप्ते, तद्यथा–

वामपार्श्वं १ दक्षिणपार्श्वं २ च, तत्र—तयोर्मध्ये यत्तत् वामपार्श्वं तत् शुभपरिणामं भवति, तत्र च यत्तद्दक्षिणपार्श्वं तद्दुःखपरिणामं भवति । तथा 'आउसो !' हे आयुष्मन् ! अस्मिन् शरीरे षष्टिः सन्धिशतं ज्ञातव्यं, तत्र सन्धयः—अङ्गुल्याद्यस्थिखण्डमेलापकस्थानानि, 'सत्तुत्तरे' सप्तोत्तरं मर्मशतं भवति, तत्र मर्माणि—शङ्खाणिकावियरकादीनि 'तिन्नि०' त्रीण्यस्थिदामशतानि—हड्डमालाशतानि भवन्ति, 'नव ण्हारुसयाइं'ति स्नायूनां—अस्थिबन्धनशिराणां नव शतानि, 'सत्त०' सप्त शिराशतानि—स्नसाशतानि, पञ्च पेसीशतानि, 'नव ध०' नव धमन्यो—रसवहनाड्यः 'नव०' नवनवतिः रोमकूपशतसहस्राणि रोम्णां—तनुरुहाणां कूपा इव कूपा रोमकूपाः रोमरन्ध्राणीत्यर्थः तेषां नवनवतिर्लक्षा इति, विना केशश्मश्रुभिः, केशश्मश्रुभिः सह पुनः सार्धास्तिस्रो रोमकूपकोट्यो भवन्ति मनुष्यशरीरे इति ॥ अथ पूर्वोक्तानि शिरासप्तशतानि कथं भवन्तीति सूत्रकार एवाह—'आउसो०' हे आयुष्मन् ! अस्मिन् शरीरे 'सट्ठि' इह पुरुषशरीरेनाभिप्रभवाणि शिराणां—स्नसानां सप्त शतानि भवन्ति, तत्र षष्ठ्यधिकं शतं शिराणां नाभिप्रभवाणामूर्ध्वगामिनीनां शिरस्युपागतानां भवन्ति, यास्तु रसहरण्य इत्युच्यन्ते, 'जाणं सि'त्ति यासामूर्ध्वगामिनीनां शिराणां 'से' तस्य जीवस्य निरुपघातेन—अनुग्रहेण चक्षुः१श्रोत्र२घ्राण३जिह्वा४बलं भवति, यासां 'से' तस्योपघातेन—विघातेन चक्षुःश्रोत्रघ्राणजिह्वाबलमुपहन्यते, तथा 'आउसो' हे आयुष्मन् ! अस्मिन् शरीरे षष्ठ्यधिकं शतं १६० शिराणां नाभिप्रभवाणां नाभेरुत्पन्नानामित्यर्थः अधोगामिनीनां पादतले उपगतानां—प्राप्तानां भवति, यासां निरुपघातेन जङ्घाबलं भवति, तासां चैव 'से' तस्य जीवस्योपघातेन—विकारप्राप्तेन शीर्षवेदना—सर्वमस्तकपीडा अर्धशीर्षवेदना मस्तकशूलं च भवति,



'अच्छिणि'त्ति अक्षिणी—लोचने 'अंधिज्जंति'त्ति अन्धीभवत इत्यर्थः ॥ २ ॥ तथा 'आउसो०' हे आयुष्मन् ! अस्मिन् प्रत्यक्षे शरीरे षष्ठ्यधिकं शतं शिराणां नाभिप्रभवाणां तिर्यग्गामिनीनां हस्ततले उपागतानां भवति, यासां निरुपघातेन—निरुपद्रवेण बाहुबलं भवति, तासां चैव 'से' तस्योपघातेन—उपद्रवेण पार्श्ववेदना पृष्ठिवेदना कुक्षिवेदना कुक्षिशूलं च भवति, तथा 'आउ०' हे आयुष्मन् ! अस्य जन्तोः षष्ठ्यधिकं शतं शिराणां नाभिप्रभवाणामधोगामिनीनां गुदप्रविष्टानां भवति, यासां निरुपघातेन—उपद्रवाभावेन मूत्रपुरीषवातकर्म—प्रस्रवणकर्म विष्ठाकर्म वायुकर्म प्रवर्त्तते, मूत्रादिकं सुखेन कर्त्तुं शक्यत इत्यर्थः, तासां चैव गुदप्रविष्टशिराणामुपघातेन मूत्रपुरीषवातनिरोधो भवति, निरोधेनार्शांसि—गुदाङ्कुराः 'हरस' इति लोकोक्तिः क्षुभ्यन्ति—क्षोभं यान्ति, परमपीडाकरं रुधिरं मुञ्चन्तीत्यर्थः, भवभावनोक्तकालर्षिवत् पाण्डुरोगश्च भवति, तथा 'आउसो०' हे आयुष्मन् ! अस्य जन्तोः पञ्चविंशतिः शिराः 'सिंभधारिणी'त्ति श्लेष्मधारिण्यो भवन्ति, 'पंच०' पञ्चविंशतिः शिराः पित्तधारिण्यः, दश शिराः शुक्रधारिण्यः, 'सत्त सि०' पुरुषस्योक्तप्रकारेण सप्त शिराशतानि भवन्ति, कथम् ?,शरीरेऊर्ध्वगामिन्यः १६० अधोगामिन्यः १६० तिर्यग्गामिन्यः १६० अधोगामिन्यो गुदप्रविष्टाः १६० श्लेष्मधारिण्यः २५ पित्तधारिण्यः २५ शुक्रधारिण्यः १० एवं सर्वाः ७०० शिराः भवन्ति पुरुषाणां शरीर इति । 'तीसू०' पुरुषोक्ताः यास्तास्त्रिंशदूनाः स्त्रियाः भवन्ति, सप्तत्यधिकानि षट् शतानि भवन्तीत्यर्थः ६७०, 'वीसू०' पुरुषोक्ता यास्ताः विंशत्यूनाः पाण्डकस्याशीत्यधिकानि षट् शतानि भवन्तीत्यर्थः ६८० ॥ अथ शरीरे रुधिरादिमानमाह—'आउसो' हे आयुष्मन् ! अस्य जन्तोः रुधिरस्याढकं भवति, वसाया अर्धाढकं, 'मत्थुलिंगस्से'ति मस्तकभेज्जकस्य फिप्फिसादेर्वा

प्रस्थः मूत्रस्याढकं पुरीषस्य प्रस्थः पित्तस्य कुडवः श्लेष्मणः कुडवः शुक्रस्यार्धकुडवो भवति, एतच्चाढकप्रस्थादिमानं बालकुमारतरुणादीनां 'दो असईओ पसई दो पसईयो य सेइआ होइ चत्तारि सेईया कुलओ चत्तारि कुलओ पत्थो चत्तारि पत्था आढग'मित्यात्मीय२हस्तेनानेतव्यमिति, 'जं जाहे' यद् रुधिरादिकं यदा दुष्टं भवति तत्तदाऽतिप्रमाणं भवति, अयमाशयः–उक्तमानस्य शुक्रशोणितादेर्हीनाऽऽधिक्यं स्यात्तत्तत्र वातादिदूषितत्वेनावसेयमिति। 'पंच०' पञ्चकोष्ठः पुरुषः, पुरुषस्य पञ्च कोष्ठकाः भवन्ति, षट्कोष्ठा स्त्री, कोष्ठकस्वरूपं सम्प्रदायादवगन्तव्यमिति, नवश्रोत्रः पुरुषः, तत्र कर्णद्वय २-चक्षुर्द्वय २ घ्राणद्वय २ मुख ७ पायू ८ पस्थ ९ लक्षणानि इति, एकादशश्रोत्रा स्त्री भवति, पूर्वोक्तानि नव स्तनद्वययुक्तान्येकादश श्रोत्राणि स्त्रीणां भवन्तीत्येतन्मानुषीणामुक्तं, गवादीनां तु चतुःस्तनीनां त्रयोदश १३ शूकर्यादीनामष्टस्तनीनां सप्तदश १७ निर्व्याघाते एवं, व्याघाते पुनरेकस्तन्या अजाया दश १०, त्रिस्तन्याश्च गोर्द्वादशेति । 'पंच' पुरुषस्य पञ्च पेसीशतानि भवन्ति ५०० त्रिंशदूनानि स्त्रियाः ४७० विंशत्यूनानि पञ्च पेसीशतानि नपुंसकस्य ४८० ॥ उक्तं शरीरस्वरूपं, अथास्यैवासुन्दरत्वं दर्शयन्नाह—

अब्भिंतरंसि कुणिमं जो परिअत्तेउ बाहिरं कुज्जा । तं असुइं दट्ठूणं सयावि जणणी दुगुंछिज्जा ॥ १ ॥ (८३) माणुस्सयं सरीरं पूइयमं मंससुक्कहड्डेणं । परिसंठवियं सोहइ अच्छायणगंधमल्लेणं ॥ २ ॥ (८४) इमं चेव य सरीरं सीसघडीमेयमज्जमंसट्ठियमत्थुलुंगसोणियवालुंडयचम्मकोसनासियसिंघाणयधीमलालयं अमणुन्नगं सीसघडीभंजियं गलंतनयणं कन्नुट्ठगंडतालुयं अवालुयाखिल्लचिक्कणं चिलिचिलियं दंतमलमइलं बीभच्छदरिसणिज्जं अंसलगबाहुलगअंगुलीअंगुट्ठगनहसंधिसंघायसंधियमिणं बहुरसियागारं नालखंधच्छिराअणेगण्हारुबहुधमणिसंधिनद्धं पागडउदरकवालं कक्खनिक्खुडं कक्खगकलियं दुरंतं अट्ठिधमणिसंताणसंतयं सवओ समंता परिसवंतं च रोमकूवेहिं सयं असुइं सभावओ परमदुग्गंधि कालिज्जयअंतपित्तजरहिययफोप्फसफेफसपिलिहोदरगुज्झकुणिमनवछिड्डुधिविधिवंतहियायं दुरहिपित्तसिंभमुत्तोसहाययणं सवओ दुरंतं गुज्झोरुजाणुजंघापायसंघायसंधियं असुइ कुणिमगंधि, एवं चिंतिज्जमाणं बीभच्छदरिसणिज्जं अधुवं अनियमं असासयं सडणपडणविद्धंसणधम्मं पच्छा व पुरा व अवस्स चइयवं निच्छयओ सुट्ठु जाण एयं आइनिहणं एरिसं सवमणुयाणं देहं एस परमत्थओ सभावो ( सूत्रं १७ )



'अब्भिंतर०' गाथा, 'अब्भिंतरंसी'ति शरीरमध्यप्रदेशे 'जो'त्ति यत् 'कुणिमं' अपवित्रं मांसं वर्त्तते तन्मांसं 'परियत्तेउ'त्ति परावर्त्य–परावर्तं कृत्वा यदि बहिः–बहिर्भागे कुर्यात् तदा तन्मांसं 'असुइ' अशुचि–अपवित्रं दृष्ट्वा स्वका अपि आत्मीया अपि अन्या आस्तां स्वजननी–स्वाम्बा 'दुगुंछिज्ज'त्ति जुगुप्सां कुर्यात्–हा! किं मयाऽपवित्रं दृष्टमिति ॥ १ ॥ 'माणुस्सयं' गाथा, मानुष्यकं–मनुष्यसम्बन्धि शरीरं–वपुः 'पूइयमं'ति पूतिमत् अपवित्रमित्यर्थः, केन ?–मांसशुक्रहड्डेन, हड्डं देश्यमस्थिवाचीति, 'परिसंठवियं'ति विभूषितं सत् 'सोहइ'त्ति शोभते, केन ?–आच्छादनगन्धमाल्येन, तत्राच्छादनं–वस्त्रादि गन्धः–कर्पूरादिः माल्यं–पुष्पमालादि, 'इमं चेव य'इत्यादि गद्यं, इदमेव च मनुजशरीरं–वपुः शीर्षघटीव मस्तकहड्डं मेदश्च–अस्थिकृत् चतुर्थो धातुरित्यर्थः मज्जा च–शुक्रकरः षष्ठो धातुरित्यर्थः मांसं च–पललं

तृतीयो धातुरित्यर्थः, अस्थि च-कुल्यं पञ्चमो धातुरित्यर्थः मस्तुलुङ्गश्च-मस्तकस्नेहः शोणितं च-रुधिरं द्वितीयो धातुरित्यर्थः वालुण्डकश्च-अन्तरशरीरावयवविशेषः चर्मकोशश्च-छविकोषः नासिकासिङ्घानश्च-घ्राणमलविशेषः धिङ्मलं च-अन्यदपि शरीरोद्भवं निन्द्यमलं तानि तेषामालयं-गृहमित्यर्थः अमनोज्ञकं-मनोज्ञभाववर्जितं शीर्षघटी-करोटिका तया भञ्जितं-आक्रान्तमित्यर्थः, गलन्नयनं कर्णोष्ठगण्डतालुकं अवालुया इति लोकोक्त्या अवालुखिलश्च खील इति जनोक्तिः ताभ्यां चिक्कणं-पिच्छलमित्यर्थः 'चिलिचिलिय'मिति चिगचिगायमानं घर्मावस्थादौ दन्तानां मलं दन्तमलं तेन 'मइल'त्ति मलिनं-मलीमसमित्यर्थः, बीभत्सं-भयङ्करं दर्शनं-आकृतिरवलोकनं वा रोगादिना कृशावस्थायां यस्य वपुषस्तद् बीभत्सदर्शनं, 'अंसलग'त्ति अंसयोः-स्कन्धयोः 'बाहुलग'त्ति बाह्वोः-भुजयोः अङ्गुलीनां-करशाखानां 'अंगुट्ठग'त्ति अङ्गुष्ठयोरङ्गुलयोः नखानां-महाराजानां (करजानां) ये सन्धयस्तेषां सङ्घातेन-समूहेन सन्धितमिदं वपुः 'बहु०' बहुरसिकागारं 'नालखं०' नालेन स्कन्धशिराभिः-अंसधमनीभिः 'अणेगण्हारु'त्ति अनेकस्नायुभिः-अस्थिबन्धनशिराभिः बहुधमनिभिः-अनेकशिराभिः सन्धिभिः-अस्थिमेलापकस्थानैश्च 'नद्धं'ति नियन्त्रितं प्रकटं-सर्वजनदृश्यमानमुदरकपालं-जठरकडहलकं यत्र तत्प्रकटोदरकपालं, कक्षैव-दोर्मूलमेव निष्कुटं-कोटरं जीर्णशुष्कवृक्षवद् यत्र तत् कक्षनिष्कुटं कक्षायां गच्छन्तीति कक्षागाः अधिकारात्तद्गतकुत्सितवालास्तैः कलितं-सदा सहितं कक्षागकलितं यद्वा कक्षायां भवाः काक्षिकाः-तद्गतकेशलतास्ताभिः कलितं, 'दुरंतं'ति दुष्टः अन्तो-विनाशः प्रान्तो वा यस्य तद्दुरन्तं-दुष्पूरं, अस्थिधमन्योः सन्तानेन-परम्परया 'संतयं'ति व्याप्तं यत्तदस्थिधमनिसन्तानसन्ततं, सर्वतः-सर्वप्रकारैः



समन्ततः-सर्वत्र रोमकूपै-रोमरन्ध्रैः परिस्रवत्-गलगलत् सर्वत्र सच्छिद्रघटवत् चशब्दादन्यैरपि नासिकादिरन्ध्रैः परिस्रवत् 'सयं'ति स्वयमेवाशुचि-अपवित्रं 'सभावउ'त्ति स्वभावेन परमदुष्टगन्धीति 'कालिज्जयअंतपित्तजरहिययफोप्फसफेफसपिलिह'त्ति प्लीहा-गुल्म 'उदर'त्ति जलोदरं गुह्यकुणिमं-मांसं नव छिद्राणि यत्र तत् तथा 'थिविथिवंत'त्ति द्रिगद्रिगायमानं 'हियय'त्ति हृदयं यत्र तत् परमयावत् हृदयं नव छिद्राणि तु नयनद्वयकर्णद्वयनासिकाद्वयजिह्वाशिश्नापानलक्षणानि 'दुरहि'त्ति दुर्गन्धानां पित्तसिंभमूत्रलक्षणानामौषधानामायतनं-गृहं सर्वौषधायतनं, रोगादावस्मिन् सर्वौषधप्रक्षेपात्, सर्वत्र-सर्वभागे दुष्टोऽन्तो-विनाशः प्रान्तो वा यस्य तत् सर्वतोदुरन्तं, 'गुज्झो०' गुह्योरुजानुजङ्घापादसङ्घातसन्धितं-उपस्थसक्थिनलकीलनलकिनीक्रमणपरस्परमीलनसमूहसीवितं, अशुचिकुणिमस्य-अपवित्रमांसस्य गन्धो यत्र तदशुचिकुणिमगन्धि 'एवं चि०' एवं-पूर्वोक्तप्रकारेण चिन्त्यमानं बीभत्सदर्शनीयं भयङ्कररूपं 'अधुवं अनिययं असासयं'चेति पदत्रयस्य व्याख्या पूर्ववत्, 'सडण०' शटनपतनविध्वंसनधर्मं, तत्र शटनं-कुष्ठादिनाऽङ्गुल्यादेः पतनं बाह्वादेः खङ्गच्छेदादिना विध्वंसनं-सर्वथा क्षयः एते धर्माः-स्वभावा यस्य तत्तथा, 'पच्छा व पुरा व अवस्स चइयव्वं'त्ति पूर्ववत् 'निच्छ०' निश्चयतः सुष्ठु भृशं त्वं 'जाण'त्ति जानीहि एतन्मनुष्यशरीरं 'आइनिहणं'ति आदिनिधनं सादिसान्तमित्यर्थः, ईदृशं पूर्ववर्णितं वक्ष्यमाणं वा सर्वमनुजानां-समस्तमनुष्याणां देहः-शरीरं एषः पूर्वोक्तः शरीरस्य परमार्थतः-तत्त्वतः स्वभावः ॥ अथ विशेषतः शरीरादेरशुभत्वं दर्शयति—

**सुक्कंमि सोणियंमि य संभूओ जणणिकुच्छिमज्झंमि। तं चेव अमिज्झरसं नवमासे घुंटियं संतो ॥ १ ॥**

(८५) जोणीमुहनिप्फिडिओ थणगच्छीरेण वढ्ढिओ जाओ। पगईअमिज्झमइओ कह देहो धोइउं सक्को? ॥ २ ॥ (८६) हा असुइसमुप्पन्ना य निग्गया य जेण चेव दारेणं। सत्ता मोहपसत्ता रमंति तत्थेव असुइदारंमि ॥ ३ ॥ (८७)

'सुक्कंमि'इत्यादि यावदस्थिमलो तावत् पद्यं, 'सुक्कं०' जननीकुक्षिमध्ये–मातृजठरान्तरे शुक्रे–वीर्ये शोणिते–लोहिते चशब्दादेकत्र मिलिते सति प्रथमं सम्भूतः–उत्पन्नस्तदेवामेध्यरसं–विष्टारसं 'घुंटियं'ति पिबन् सन् नव मासान् यावत् स्थित इति ॥ १ ॥ 'जोणि०' योनिमुखनिस्फिटितः–स्मरमन्दिरकुण्डनिर्गतः 'थणगं'ति स्तनकक्षीरेण वर्धितः–पयोधरदुग्धेन वृद्धिं गतः, प्रकृत्या अमेध्यमयो जातः, एवंविधो देहः कहं 'धोइउं'ति धौतुं–क्षालयितुं शक्यः? ॥ २ ॥ 'हा अ०' हा इति खेदे अशुचिसमुत्पन्ना–अपवित्रोत्पन्नाः येनैव द्वारेण निर्गताः चशब्दात् यौवनमापन्नाः सत्त्वा जीवाः मोहप्रसक्ताः–विषयरक्ताः–रमन्ति–क्रीडन्ति तत्रैव अशुचिद्वारे छेदोक्तसमुद्रप्रसूतकुमारवदिति ॥ ३ ॥ एवं शरीराशुचित्वे सति शिष्यः प्रश्नयति—

किह ताव घरकुडीरी कईसहस्सेहिं अपरितंतेहिं। वन्निज्जइ असुइबिलं जघणंति सकज्जमूढेहिं? ॥४॥ (८८) रागेण न जाणंति वराया कलमलस्स निद्धमणं। ताणं परिणंदंता फुल्लं नीलुप्पलवणं व ॥ ५ ॥ (८९) कित्तियमित्तं वन्ने अमिज्झमइयंमि वच्चसंघाए। रागो हु न कायव्वो विरागमूले सरीरंमि ॥ ६ ॥ (९०॥ किमिकुलसयसंकिण्णे असुइमचुक्खे असासयमसारे। सेयमलपुव्वडंमी निव्वेयं वच्चह सरीरे ॥ ७ ॥ (९१)



दंतमलकन्नगूहगसिंघाणमले य लालमलबहुले। एयारिसे बीभच्छे दुगुंछणिज्जंमि को रागो? ॥ ८ ॥ (९२) को सडणपडणविकिरिणविद्धंसणचयणमरणधम्मंमि। देहंमि अहीलासो कुहियकडिणकट्ठभूयंमि ॥९॥ (९३) कागसुणगाण भक्खे किमिकुलभत्ते य वाहिभत्ते य। देहंमि मच्छभत्ते सुसाणभत्तंमि को रागो? ॥ १० ॥ (९४) असुई अमिज्झपुन्नं कुणिमकलेवरकुडिं परिसवंति। आगंतुयसंठवियं नवच्छिड्डमसासयं जाणे ॥ ११ ॥ (९५) पिच्छसि मुहं सतिलयं सविसेसं रायएण अहरेणं। सकडक्खं सविआरं तरलच्छिं जुव्वणित्थीए ॥ १२ ॥ (९६) पिच्छसि बाहिरमट्ठं न पिच्छसी उज्झरं कलिमलस्स। मोहेण नच्चयंतो सीसघडीकंजियं पियसि ॥ १३ ॥ (९७) सीसघडीनिग्गालं जं निट्ठुहसी दुगुंछसी जं च। तं चेव रागरत्तो मूढो अइमुच्छिओ पियसि ॥ १४ ॥ (९८) पूइयसीसकवालं पूइयनासं च पूइदेहं च। पूइयछिड्डुविछिड्डं पूइयचम्मेण य पिनद्धं ॥ १५ ॥ (९९) अंजणगुणसुविसुद्धं ण्हाणुव्वट्टणगुणेहिं सुकुमालं। पुप्फुम्मीसियकेसं जणेइ बालस्स तं रागं ॥ १६ ॥ (१००) जं सीसपूरउत्ति य पुप्फाइं भणंति मंदविन्नाणा। पुप्फाइं चिय ताइं सीसस्स य पूरयं सुणह ॥ १७ ॥ (१०१) मेओ वसा य रसिया खेले सिंघाणए य छुभ एयं। अह सीसपूरओ भे नियगसरीरम्मि साहीणो ॥ १८ ॥ (१०२) सा किर दुप्पडिपूरा वच्चकुडी दुप्पया नवच्छिद्दा। उक्कडगंधविलित्ता बालजणो अइमुच्छियं गिद्धो ॥ १९ ॥ (१०३) जं पेमरागरत्तो अवयासेऊण गूढमुत्तोलिं। दंतमलचिक्कणंगं सीसघडीकंजियं पियसि ॥ २० ॥ (१०४) दंतमुसलेसु गहणं गयाण मंसे य ससयमीयाणं। वालेसुं चम-

रीणं चम्मनद्दे दीवियाणं च ॥ २१ ॥ (१०५) पूइयकाए य इहं चवणमुहे निचकालवीसत्थो । आइक्खसु सब्भावं किम्मिऽसि गिद्धो तुमं मूढ ! ॥ २२ ॥ (१०६) दंतावि अकज्जकरा वालाविव वड्डमाण बीभच्छा। चम्मंपि य बीभच्छं भण किं तसि तं गओ रागं ? ॥ २३ ॥ (१०७) सिंभे पित्ते मुत्ते गूहंमि य वसाइ दंतकुंडीसु । भणसु किमत्थं तुज्झं असुइंमि विवड्डिओ रागो ? ॥ २४ ॥ (१०८) जंघट्ठियासु ऊरु पइट्ठिया तट्ठिया कडीपिट्ठी । कडियट्ठिवेढियाइं अट्ठारस पिट्ठिअट्ठीणि ॥ २५ ॥ (१०९) दो अच्छिअट्ठियाइं सोलस गीवट्ठिया मुणेयव्वा । पिट्ठीपइट्ठियाओ बारस किल पंसुली हुंति ॥ २६ ॥ (११०) अट्ठियकढिणे सिरण्हारुबंधणे मंसचम्मलेवंमि । विट्ठाकोट्ठागारे को वच्चघरोवमे रागो ? ॥ २७ ॥ (१११) जह नाम वच्चकूवो निच्चं भिणिभिणभणंतकायकली । किमिएहिं सुलुसुलायइ सोएहि य पूइयं वहइ ॥ २८ ॥ (११२)

'किह ता०' हे पूज्याः ! कथं तावत् गृहकुड्याः स्त्रीदेहस्येत्यर्थः 'अपरितंते०' अपरितान्तैः–अश्रान्तैः–परिश्रममगणयद्भिः स्वकार्यमूढैः–स्वस्वार्थमौढ्यगतैः कविसहस्रैः 'जघणं'ति स्त्रीकटेरग्रभागं भगरूपमित्यर्थः वर्ण्यते–वचनविस्तरेण विस्तार्यते, किंभूतं जघनं ?–'अशुचिबिलं' परमापवित्रं विवरम्, उक्तं च–"चर्मखण्डं सदाभिन्नं, अपानोद्गारवासितम् । तत्र मूढाः क्षयं यान्ति, प्राणैरपि धनैरपि॥ १ ॥" तत्र प्राणैः सत्यक्यादयः क्षयं गताः धनैर्धम्मिल्लादयः इति ॥४॥ 'रागे०' हे शिष्य ! रागेण–तीव्रकामरागेण न जानन्ति हृदये चशब्दादन्येषां न कथयन्ति वराकाः–तपस्विनः कलमलस्य–अपवित्रमलस्य निर्धमनं खाल्लू इति 'ता णं'ति 'णं' वाक्यालङ्कारे, तत्–जघनं 'परिणंदंति'त्ति परमविषयासक्ता वर्णयन्ति,



कथम् ?–वकार इवार्थे, इवोत्प्रेक्षते, फुल्लं–प्रफुल्लं विकसितमित्यर्थः नीलोत्पलवनं–इन्दीवरकाननम् ॥ ५ ॥ 'कित्तिय०' कियन्मात्रं–कियत्प्रमाणं 'वन्ने'त्ति वर्णयामि शरीरे–वपुषि, किंभूते ?–अमेध्यं प्रचुरमस्मिन्नित्यमेध्यमये–गूथात्मके इत्यर्थः, वर्चस्कसङ्घाते–परमापवित्रविष्ठासमूहे 'विरागमूले'त्ति विरुद्धो रागः विरागः मनोजराग इत्यर्थः तस्य मूलं–कारणं कामासक्तानामङ्गारवतीरूपदर्शने चन्द्रप्रद्योतनस्येव, यद्वा विगतो–गतो रागो–मन्मथभावो यस्मात्स विरागः वैराग्यमित्यर्थः तस्य मूलं–कारणं, काष्ठश्रेष्ठेरिव (श्रेष्ठिन इव) तस्मिन् विरागमूले हु यस्मादेवं तस्माद्रागो न कर्त्तव्यः, स्थूलभद्रवज्रस्वामिजम्बूस्वाम्यादिवत् ॥ ६ ॥ 'किमि०' कृमिकुलशतसङ्कीर्णे 'असुइमचुक्खे'त्ति अशुचिके–अपवित्रमलव्याप्ते अचुक्षे–अशुद्धे सर्वथा पवित्रीकर्तुमशक्यत्वात्, अशाश्वते क्षणं क्षणं प्रति विनश्वरत्वात्, असारे–सारवर्जिते 'सेयमलपुव्वडंमि'त्ति दुर्गन्धस्वेदमलचिगचिगायमाने, एवंविधे शरीरे हे जीवाः ! यूयं निर्वेदं–वैराग्यं व्रजत–गच्छत, विक्रमयशोनृपस्येवेति ॥ ७ ॥ 'दंतम०' दन्तमलकर्णमलगूथकसिंघानमले चशब्दः शरीरगतानेकप्रकारमलग्रहणसूचनार्थः लालामलबहुले एतादृशे बीभत्से–जुगुप्सनीये सर्वथा निन्द्ये वपुषि को रागः ? ॥ ८ ॥ 'को सड०' देहे–शरीरे कः अभिलाषः–वाञ्छा ?, किंभूते ?–शटनपतनविकिरणविध्वंसनच्यवनमरणधर्मे, तत्र शटनं कुष्ठादिनाऽङ्गुल्यादेः पतनं बाह्वादेः खड्गच्छेदादिना विकिरणं–विनश्वरत्वं विध्वंसनं–रोगज्वरादिना जर्जरीकरणं च्यवनं–हस्तपादादेर्देशक्षयः मरणं–सर्वथा क्षयः, पुनः किंभूते ?–कुथितकठिनकाष्ठभूते–विनष्टकर्कशदारुतुल्ये ॥ ९ ॥ 'कागसु०' देहे को रागः ?, किंभूते ?–काकश्वानयोः–घूकारिभषणयोः भक्ष्ये–खाद्ये कृमिकुलभक्ते च व्याधिभक्ते च मत्स्यभक्ते च क्वचिन्मच्चु-

भत्तेत्ति मृत्युभक्तमिति श्मशानभक्ते ॥ १० ॥ 'असुइ' अशुचि–सदाऽविशुद्धममेध्यपूर्णं–विष्ठाभूतं कुणिमकलेवरकुडिं–मांसशरीरहड्डयोर्गृहं 'परिसवंति'त्ति परिस्रवत्–सर्वतो गलत्, आगन्तुकसंस्थापितं–मातापित्रोः शोणितपुद्गलैर्निष्पादितं नवच्छिद्रं–नवरन्ध्रोपेतमशाश्वतं–अस्थिरं एवंविधं वपुस्त्वं जानीहीति ॥ ११ ॥ 'पिच्छसि' 'जुवणित्थीए'त्ति यौवनस्त्रियाः–तरुण्याः मुखं–तुण्डं त्वं पश्यसि नन्दिषेणशिष्य १ अर्हन्नक २ स्थूलभद्रसतीर्थ्यक३वत्, किंभूतं ?–सतिलकं–सपुण्ड्रं सविशेषं–कुङ्कुमकज्जलादिविशेषसहितं, केन सह ?–रागेण–ताम्बूलादिरागवताऽधरेण–ओष्ठेन सह सकटाक्षं–अर्धवीक्षणसहितं सविकारं–भ्रूचेष्टासहितं, यथा तपस्विनामपि मन्मथविकारजनकं, तरले–चपले काकलोचनवत् अक्षिणी यत्र तत्तरलाक्षि इति ॥१२॥ 'पिच्छ०' एवं त्वं बहिर्मृष्टं–बहिर्भागमठारितं पश्यसि–सरागदृष्ट्याऽवलोकयसि, न पश्यसि–अन्धवन्न विलोकयसि 'उज्जरं'ति मध्यगतं कलिमलं–अपवित्रं यद्वा न पश्यसि कलिमलस्य–अपवित्रस्य 'उज्जरं'ति निर्जरणं मोहेन–रतिमोहोदयेन नृत्यन्–भूतावेष्टित इव चेष्टां कुर्वन् 'सीसघडीकंजियं पियसि'त्ति मस्तकघटीरसमपवित्रं पिबसि–पानं करोषि चुम्बनादिप्रकारेणेति ॥१३॥ 'सीस०' मस्तकोद्भवापवित्ररसं यन्निष्ठीवयसि–थूत्करोषि जुगुप्ससे–कुत्सां करोषीत्यर्थः यच्च त्वं तदेव 'रागरत्तो' विषयासक्तः मूढो–महामोहं गतः अतिमूर्च्छितः–तीव्रगृद्धिं गतः पिबसि ॥ १४ ॥ 'पूइय०' पूतिकशीर्षकपालं–दुर्गन्धिमस्तककर्परं पूतिकनासं–अपवित्रनासिकं पूतिदेहं–दुर्गन्धिगात्रं पूतिकच्छिद्रविवृद्धं–अपवित्रलघुविवरवृद्धविवरं पूतिकचर्मणा–अशुभाजिनेन पिनद्धं–नियन्त्रितम् ॥ १५ ॥ 'अंजण०' अञ्जनगुणसुविशुद्धं–तत्राञ्जनं–लोचने कज्जलं गुणा–नाडकगोफणकराखडिकादयः तैः सुष्ठु विशुद्धं–अत्यर्थं शोभायमानं स्नानोद्वर्तनगुणैः



सुकुमालं तत्र स्नानमनेकधा क्षालनमुद्वर्त्तनं–पिष्टिकादिना मलोत्तारणं गुणाः–धूपनादिप्रकाराः यद्वा स्नानोद्वर्त्तनाभ्यां गुणास्तैर्मृदुत्वं गतं, पुष्पोन्मिश्रितकेशं–अनेककुसुमवासितकुन्तलं–एवंविधं तन्मुखं मस्तकं शरीरं वा बालस्य–मन्मथकर्कशबाणविद्धत्वेन गतसदसद्विवेक(स्य)विकलस्य जनयति–उत्पादयति रागं–मन्मथपारवश्यं येन गुर्वादिकमपि न गणयति, नन्दिषेणाऽऽषाढभूतिमुन्यादिवत् ॥ १६ ॥ 'जं सी०' मन्दविज्ञाना–मन्मथग्रहग्रथिलीकृताः 'जं'ति यानि पुष्पाणि–कुसुमानि शीर्षपूरकं–मस्तकाभरणमिति 'भणंति' कथयन्ति पुष्पाण्येव तानि शीर्षस्य पूरकं श्रृणुत यूयमिति ॥ १७ ॥ 'मेउव०' मेदः–अस्थिकृत् वसा–विस्नसा चशब्दोऽनेकशरीरान्तर्गतावयवग्रहणार्थः रसिका–व्रणाद्युत्पन्ना 'खेले'त्ति कण्ठमुखश्लेष्मा 'सिंघाणए य'त्ति नासिकाश्लेष्मा 'एयं'ति एतन्मेदादिकं 'छुभ'त्ति क्षुपध्वं–मस्तके प्रक्षेपयत अथ शीर्षपूरको 'भे' भवतां निजकशरीरे स्वाधीनः–स्वायत्तो वर्त्तते ॥ १८ ॥ 'सा किर०' सा वर्चस्ककुटी–विष्ठाकुटीरिका 'किर'त्ति निश्चयेन दुष्प्रतिपूरा पूरयितुमशक्येत्यर्थः, किंभूता ?–द्विपदा नवच्छिद्रा, उत्कटगन्धविलिप्ता–तीव्रदुर्गन्धव्याप्ता, एवंविधा शरीरकुटी वर्त्तते, तां च बालजनो–मूर्खलोकः अतिमूर्च्छितं यथा स्यात् तथा गृद्धो–लम्पटत्वं गतः ॥ १९ ॥ कथं गृद्ध इत्याह–'जं पेम०' यस्मात् प्रेमरागरक्तः–कामरागग्रथिलीकृतो लोकः 'अवयासेऊण'त्ति अवकाश्य–प्रकाश्य–प्रकटीकृत्येत्यर्थः 'गूढमुत्तोलिं'ति अपवित्रं रामाभगं पुंश्चिह्नं वा जुगुप्सनीयं, दन्तानां मलः–पिप्पिका दन्तमलस्तेन सह 'चिक्कणंगं' चिक्कणाङ्गं–चिगचिगायमानमङ्गं–शरीरमालिङ्ग्य च शीर्षघटीकाञ्जिकं–कपालकर्परखट्टरसं चुम्बनादिप्रकारेण 'पियसि'त्ति पिबसि, अतृप्तवत् घुंटयसि ॥ २० ॥ 'दंतमु०' गजानां दन्तमुशलेषु 'गहणं'ति ग्रहणं–

आदानं लोकानां वर्त्तते मांसे चशब्दात् स्नसाश्रृङ्गादौ शशकमृगाणां ग्रहणं वर्त्तते, चमरीणां वालेषु ग्रहणं, द्वीपिकानां-चित्रकव्याघ्रादीनां चर्मनखेषु ग्रहणं, चशब्दादनेकतिरश्चामवयवग्रहणं वर्त्तते। को भावः?-यथा गजादीनां तिरश्चां दन्तादिकं सर्वेषां भोगाय भवति तथा मनुष्यावयवो न भोगाय भवति पश्चादतः कथ्यतेऽनेनादौ जिनधर्मो विधेय इति ॥२१॥ 'पूइ०' इह पूतिककाये-अपवित्रवपुषि च्यवनमुखे-मरणसम्मुखे नित्यकालविश्वस्तः-सदा विश्वासं गतः 'आइक्खसु०'आख्याहि-कथय सद्भावं-हार्दं 'किम्हिऽसि'त्ति कस्मादसि गृद्धस्त्वं मूढो-मूर्खः, यद्वा हे मूढ!-मूर्ख ब्रह्मदत्तदशमुखादिवत् ॥२२॥ 'दंता०'दन्ता अप्यकार्यकराः वाला अपि विवर्धमानाः सर्पवद् बीभत्सा भयङ्कराः चर्मापि बीभत्सं भण-कथय किं 'तसि०'ति तस्मिन् शरीरे 'त'मिति त्वं रागं गतः॥ २३॥ 'सिंभे'त्ति० कफे पित्ते-मायुषि मूत्रे-प्रस्रवणे गूथे-विष्ठायां 'वसाइ'त्ति वसायां स्नसायां 'दंतकुंडीसु'त्ति हड्डुभाजने, यद्वाऽनुस्वारोऽलाक्षणिकः दन्तकुड्यां, यद्वा 'दंतकुंडीसु'त्ति दंष्ट्रासु भण-कथय किमर्थं तवाशुचावपि वर्धितो रागः? ॥ २४॥ 'जंघ०' 'जंघट्ठियासु ऊरू'त्ति जङ्घास्थिकयोरूरू प्रतिष्ठितौ 'पइट्ठिया तट्ठिया कडीपिट्ठी'त्ति अत्रायं पदसम्बन्धः-तयोरूर्वोः स्थिता तत्स्थिता कटिः-श्रोणिर्भवति, कट्यां प्रतिष्ठिता स्थिता 'पिट्ठी'त्ति पृष्ठिर्भवति कट्यस्थिवेष्टितान्यष्टादश १८ पृष्ठ्यस्थीनि भवन्ति शरीरे इति ॥ २५॥ 'दो अ०' द्वे अक्ष्यस्थिनी भवतः, षोडश ग्रीवास्थीनि ज्ञातव्यानि, पृष्ठिप्रतिष्ठिताः द्वादश किलेति प्रसिद्धे पंशुल्यो भवन्ति ॥ २६॥ 'अट्ठिय०' अस्थिभिः 'कढिणे' कठिनेऽस्थिकठिने यद्वा-कठिनान्यस्थिकानि यत्र तत्तथा तस्मिन्, शिरास्नसानां लघ्वितराणां बन्धनं यत्र तत्तथा तस्मिन्, मांसचर्मलेपे विष्ठाकोष्ठागारे-वर्चस्कगृहोपमे



कलेवरे हे जीव! तव को रागः?॥ २७॥ 'जह' यथेति दृष्टान्तोपदर्शने नामेति कोमलामन्त्रणे सम्भावने वा 'वच्चकूवो'त्ति वर्चस्ककूपो विष्ठाभृतकूपो भवति, किंभूतः?-'भिणिभिणी'त्ति शब्दं 'भणंत'त्ति भणतां-भृशं कथयतां काकानां कलिः-वायसानां सङ्ग्रामो यत्र स भिणिभिणिभणत्काककलिः, कृमिकैः-विष्ठानीलंगुभिः सुलुसुलेत्येवंशब्दं करोतीति-सुलुसुलायते, स्रोतोभिश्च-रेलकैः पूतिकं-परमदुर्गन्धं वहति-स्रवतीत्यर्थः विष्ठाकूपः, तथेदमपि शरीरं ज्ञातव्यं मृतावस्थायां रोगाद्यवस्थायां वेति ॥२८॥ अथ शरीरस्य शवावस्थां दर्शयति गाथात्रयेण-

उद्धियनयणं खगमुहविकट्टियं विप्पइन्नबाहुलयं। अंतविकड्ढियमालं सीसघडीपागडीघोरं ॥ २९॥ (११३) भिणिभिणिभणंतसद्दं विसप्पियं सुलुसुलिंतमंसोडं। मिसिमिसिमिसिंतकिमियं थिविथिविथिविअंतबीभच्छं॥ ३०॥ (११४) पागडियपंसुलीयं विगरालं सुक्कसंधिसंघायं। पडियं निचेयणयं सरीरमेयारिसं जाण॥ ३१॥ (११५) वच्चाउ असुइतरं नवहिं सोएहिं परिगलंतेहिं। आमगमल्लगरूवे निव्वेयं वच्चह सरीरे ॥ ३२॥ (११६) दो हत्था दो पाया सीसं उच्चंपियं कबंधंमि। कलमलकोट्ठागारं परिवहसि दुयादुयं वच्चं ॥ ३३॥ (११७) तं च किर रूववंतं वच्चंतं रायमग्गमोइण्णं। परगंधेहिं सुगंधय मन्नंतो अप्पणो गंधं॥ ३४॥ (११८) पाडलचंपयमल्लियअगरुयचन्दणतुरुक्कवामीसं। गंधं समोयरंतं मन्नंतो अप्पणो गंधं ॥३५॥ (११९) सुहवाससुरहिगंधं वायसुहं अगरुगंधियं अंगं। केसा ण्हाणसुगंधा कयरो ते अप्पणो गंधो? ॥३६॥ (१२०) अच्छिमलो कन्नमलो खेलो सिंघाणओ य पूओ अ। असुईमुत्तपुरीसो एसो ते अप्पणो गंधो ॥३७॥ (१२१) (सूत्रं १८)

'उद्धि० भिणि० पाग०' उद्धृते-निष्कासिते काकादिभिर्नयने-लोचने यस्य यस्मिन् यस्माद्वा तदुद्धृतनयनं, खग-मुखैः-विहगतुण्डैः 'विकड्डिय'ति विकर्त्तितं-विशेषेण स्थाने स्थाने पाटितं खगमुखविकर्त्तितं, विप्रकीर्णौ-अवकीर्णौ विरलावित्यर्थः 'बाहुलयं'ति बाहू-प्रवेष्टौ यस्य शवस्य तद् विप्रकीर्णबाहु 'अंतविकड्डियमालं'ति विकर्षितान्त्रमालं शृगालादिभिरिति 'सीसघडीपागडी'त्ति प्रकटया शीर्षघटिकया-तुम्बलिकया घोरं-रौद्रं ॥ २९ ॥ 'भिणि०' 'भिणि-भिणिभणंत'त्ति धातूनामनेकार्थत्वादुत्पद्यमानः शब्दो यत्र तत् भिणिभिणभणच्छब्दं मक्षिकादिभिर्गणगणायमान-मित्यर्थः, विसर्पद्-अङ्गादिशिथिलत्वेन विस्तारं व्रजत् 'सुलसुलिंतमंसोडं'ति सुलसुलायमानमांसपुटं 'मिसिमिसिमिसं-तकिमियं'ति मिसिमिसिसित्ति-मिसन्तः शब्दं कुर्वन्तः कृमयो यत्र तत् मिसिमिसिमिसत्कृमिकं 'थिविथिविथिविअंत-बीभच्छं'ति छवछवायमानैरन्त्रैर्बीभत्सं-रौद्रमित्यर्थः ॥ ३० ॥ 'पग०' प्रकटिताः-प्रकटत्वं प्राप्ताः पांशुलिका यत्र तत्प्रकटितपांशुलिकं, विकरालं-भयोत्पादकं, शुष्काश्च ताः सन्धयश्च शुष्कसन्धयस्तासां सङ्घातः-समुदायो यत्र तच्छु-ष्कसन्धिसङ्घातं, पतितं गर्त्तादौ निश्चेतनकं-चैतन्यविवर्जितं शरीरं-वपुः एतादृशं-पूर्वोक्तधर्मयुक्तं त्वं 'जाण'त्ति जानीहि, 'जाणे'इति पाठे तु निश्चेतनकं शरीरमहमीदृशं जानामीति ॥ ३१ ॥ 'वच्चाउ०' नवभिः स्रोतोभिः परिग-लद्भिः वर्चस्कात्-गूथात् अशुचितरं-अपवित्रतमं 'आमगमल्लगरूवे'त्ति अपक्वशरावतुल्ये शरीरे निर्वेदं-वैराग्यं व्रजत, विष्णुश्रीशरीरे विक्रमयशोराजस्येव ॥३२॥ 'दो हत्था०' द्वे हस्ते द्वे पादे 'सीसं उच्चंपियं'ति शीर्षमुत्-प्रा-बल्येन चम्पितं यत्र तच्छीर्षोच्चम्पितं तस्मिन् , यद्वा-शीर्षेणोत्-प्राबल्येन चम्पितं-आक्रमितं यत्तत् तथा तस्मिन् ,प्राकृतत्वाद-



नुस्वारः, कलमलकोष्ठागारे एवंविधे कबन्धे 'दुयादुयं'ति शीघ्रं शीघ्रं किं वर्चस्कं परिवहसि त्वमिति, अत्र यथायोगं विभ-क्तिपरिणामो ज्ञेय इति ॥३३॥ 'तं च कि०' च पुनस्तच्छरीरं 'किर'त्ति सम्भावनायां रूपवत् व्रजत् राजमार्गं 'ओइन्नं'ति प्राप्तं, तत्र परगन्धैः-पाटलचम्पकादिभिः सुगन्धकं जातं, तत्र च त्वमात्मनो गन्धं 'मन्नंतो'त्ति जानन् हर्षयसीति ॥३४॥ परगन्धं दर्शयति-'पाड०' पाटलचम्पकमल्लिकाऽगुरुकचन्दनतुरुष्कमिश्रं वा-अथवा मिश्रं-संयोगोत्पन्नं यक्षकर्दमादिकं गंधं कस्तूर्यादिकं किं भूतं?-'समोयरंतं'ति सर्वतो विस्तरत्, एवंविधं परगन्धमात्मनो गन्धमिति 'मन्नंतो'त्ति जानन् हर्षयसीति ॥ ३५ ॥ 'सुहवा०' शुभवासैः-सुन्दरचूर्णैः सुरभिगन्धो-सुष्ठुगन्धो यत्र तत् शुभवाससुरभिगन्धं वातैः शीतलादिभिः सुखं शुभं वा यत्र तत् वातसुखं, अगुरुगन्धो धूपनादिप्रकारेण जातोऽस्येति अगुरुगन्धि, तत् एवंविधं अङ्गं-गात्रं वर्त्तते 'केसा ण्हाणसुगंध'त्ति ये च केशाः-कचास्ते स्नानेन-सवनेन सुगन्धा वर्त्तन्ते, अथ कथय त्वं कतरः-कतमस्ते-तव आत्मनो गन्ध इति ? ॥ ३६ ॥ आत्मगन्धं दर्शयति यथा-'अच्छि०' अक्षिमलो-दूषिकादिः कर्णमलः श्लेष्मा-कण्ठमुखश्लेष्मा 'सिंघाणउ'त्ति नासिकाश्लेष्मा चशब्दादन्योऽपि जिह्वामलगुह्यमलकक्षामलादिः, किंभूतः ?-'पूईओ य'त्ति पूतिको-दुर्गन्धस्तथाऽशुचि-सर्वप्रकारैरशुभं मूत्रपुरीषं-प्रस्रावगूथं एषः-अनन्तरोक्तस्ते-तवा-त्मनो गन्धः ॥ ३७ ॥ अथ वैराग्योत्पादनार्थं स्त्रीचरित्रं दर्शयति, यथा-

**जाओ चिय इमाओ इत्थियाओ अणेगेहिं कइवरसहस्सेहिं विविहपासपडिबद्धेहिं कामरागमोहेहिं वन्नि-याओ ताओऽवि एरिसाओ, तंजहा-पगइविसमाओ १ पियवयणवल्लरीओ २ कइयवपेमगिरितडीओ ३**

अवराहसहस्सघरणीओ ४ पभवो सोगस्स ५ विणासो बलस्स ६ सूणा पुरिसाणं ७ नासो लज्जाए ८ संकरो अविणयस्स ९ निलयो नियडीणं १० खणी वइरस्स ११ सरीरं सोगस्स १२ भेओ मज्जायाणं १३ आसाओ रागस्स १४ निलओ दुच्चरियाणं १५ माईए संमोहो १६ खलणा नाणस्स १७ चलणं सीलस्स १८ विग्घो धम्मस्स १९ अरी साहूणं २० दूसणं आयारपत्ताणं २१ आरामो कम्मरयस्स २२ फलिहो मुक्खमग्गस्स २३ भवणं दरिद्दस्स २४ अवियाओ इमाओ आसीविसोविव कुवियाओ २५ मत्त गओ विव मयणपरवसाओ २६ वग्घीविव दुट्ठहियियाओ २७ तणच्छन्नकूवोविव अप्पगासहियियाओ २८ मायाकारओ विव उवयारसयबंधणपउत्तीओ २९ आयरियसविधपिव बहुगिज्झसब्भावाओ ३० फुंफुयाविव अंतोदहणसीलाओ ३१ नग्गयमग्गो विव अणवट्ठियचित्ताओ ३२ अंतो दुट्ठवणो विव कुहियहियियाओ ३३ किण्हसप्पोविव अविस्ससणिज्जाओ ३४ संघारोविव छन्नमायाओ ३५ संज्झब्भरागोविव मुहुत्तरागाओ ३६ समुद्दवीचिविव चलस्सभावाओ ३७ मच्छोविव दुप्परियत्तणसीलाओ ३८ वानरोविव चलचित्ताओ ३९ मच्चूविव निव्विसेसाओ ४० कालोविव निरणुकंपाओ ४१ वरुणो विव पासहत्थाओ ४२ सलिलमिव निन्नगामिणीओ ४३ किवणोविव उत्ताणहत्थाओ ४४ नरओविव उत्तासणिज्जाओ ४५ खरोविव दुस्सीलाओ ४६ दुट्ठस्सोविव दुद्दमाओ ४७ बालो इव मुहुत्तहियियाओ ४८ अंधयारमिव दुप्पवेसाओ ४९ विसवल्लीविव अणल्लियणिज्जाओ ५० दुट्ठग्गाहा इव वापी अणवगाहाओ ५१ ठाणभट्ठोविव इस्सरो अप्पसंसणिज्जाओ ५२ किंपागफलमिव मुहमहुराओ ५३ रित्तमुट्ठीविव बाललोभणिज्जाओ ५४ मंसपेसीगहणमिव सोवद्दवाओ ५५ जलियचुडिलीविव अमुच्चमाणदहणसीलाओ ५६ अरिट्ठमिव दुल्लंघणिज्जाओ ५७ कूडकरिसावणो विव कालविसंवायणसीलाओ ५८ चंडसीलोविव दुक्खरक्खियाओ ५९ अइविसाओ ६० दुगुंछियाओ ६१ दुरुवचाराओ ६२ अगंभीराओ ६३ अविस्ससणिज्जाओ ६४ अणवत्थियाओ ६५ दुक्खरक्खियाओ ६६ दुक्खपालियाओ ६७ अरइकराओ ६८ कक्कसाओ ६९ दढवेराओ ७० रूवसोहग्गमओमत्ताओ ७१ भुयगगइकुडिलहियियाओ ७२ कंतारगइट्ठाणभूयाओ ७३ कुलसयणमित्तभेयणकारिकाओ ७४ परदोसपरगासियाओ ७५ कयग्घाओ ७६ बलसोहियाओ ७७ एगंतहरणकोलाओ ७९ चंचलाओ ७९ जोइभंडोवरागो विव मुहरागविरागाओ ८० अवियाइं ताओ अंतरंगभंगसयं ८१ अरज्जुओ पासो ८२ अदारुया अडवी ८३ अणलस्स निलओ ८४ अइक्खा वेयरणी ८५ अणामिया वाही ८६ अविओगो विप्पलाओ ८७ अरु उवसग्गो ८८ रइवंतो चित्तविब्भमो ८९ सव्वंगओ दाहो ९० अणब्भया वज्जासणी ९१ असलिलप्पवाहो ९२ समुद्दरओ ९३

'जाओ चिय इमाओ' इत आरभ्य 'असिव छिज्जिउं जे' इति पर्यन्तं गद्यं, या एव इमाः—वक्ष्यमाणाः स्त्रियः अनेकैः कविवरसहस्रैः विविधपाशप्रतिबद्धैः कामरागमोहैः—मन्मथरागमूढैः 'वन्नियाउ' त्ति वर्णिताः श्रृङ्गारादिवर्णनप्रकारेणेति 'ताओवि' त्ति ता अपि ईदृश्यः—वक्ष्यमाणस्वरूपा ज्ञातव्याः, तद्यथा—'पगइविसमाओ' त्ति प्रकृत्या—स्वभावेन विषमा—वक्रभावयुक्ताः, आवश्यकोक्तपतिमारिकादिवत् १ 'पिय०' प्रियवचनवल्लर्यः—मिष्टवाणीमञ्जर्यः ज्ञातो-

क्तजिनपालितजिनरक्षितोपसर्गकारिणीरत्नद्वीपदेवीवत् २ 'कइ०' कैतवप्रेमगिरिनद्यः, कुशिष्यकूलवालुकपातिका-मागधिकागणिकावत् ३ 'अवरा०' अपराधसहस्रगृहरूपाः, ब्रह्मदत्तमातृचुलनीवत् ४ 'पभवो०' अयं स्त्रीरूपो वस्तुस्वभावः प्रभवः-उत्पत्तिस्थानं, कस्य ?-शोकस्य, सीतागमने रामस्येव ५ 'विणा०' विनाशो बलस्य—पुरुषबलस्य, क्षयहेतुत्वाद्, उक्तञ्च-"दर्शने हरते चित्तं, स्पर्शने हरते बलम् । सङ्गमे हरते वीर्यं, नारी प्रत्यक्षराक्षसी ॥ १ ॥" यद्वा-विनाशः-क्षयः, कस्य ?-बलस्य-सैन्यस्य कूणिकस्त्रीपद्मावतीवत् ६ 'सूणा०' पुरुषाणां शुना-वधस्थानं सूरीकान्ताराज्ञीवत् ७ नाशो लज्जायाः, लज्जारहितत्वात्, लक्ष्मणप्रार्थनकारिकासूर्पणखावत्, यद्वा लज्जानाशः अस्याः सङ्गे पुरुषस्य लज्जानाशो भवति, गोविन्दद्विजपुत्रवत्, यद्वा नाशः-क्षयः 'लज्जाए'त्ति लज्जायाः-संयमस्याषाढभूतियतिचारित्ररत्नलुण्टिकानटपुत्रिकावत् ८ 'संक०' शंकरः-अवकरः उकरडो इति जनोक्तिः, कस्य ?-अविनयस्य, श्वेताङ्गुल्यादिपुरुषाणां भार्यावत् ९ 'निल०' निलयो-गृहं, कासां ?-निकृतीनां-आन्तरदम्भानामित्यर्थः,चण्डप्रद्योतप्रेषिताभयकुमारवञ्चिकावेश्यावत् १० 'खणी०'ति खनिः-आकरः, कस्य ?-वैरस्य, जमदग्नितापसस्त्रीरेणुकावत् ११ शरीरं शोकस्य वीरककान्दविकस्त्रीवनमालावत् १२ भेदो-नाशः मर्यादायाः-कुलरूपायाः श्रीपतिश्रेष्ठिपुत्रीवत् यद्वा मर्यादायाः संयमलक्षणायाः विनाशः, आर्द्रकुमारसंयमस्य आर्द्रकुमारपूर्वभवस्त्रीवत् १३ 'आसाउ०'त्ति आशा-वाञ्छा रागस्य-कामरागस्य तद्धेतुकत्वात्, यद्वा आश्रयः-स्थानं रागस्य, उपलक्षणत्वात् द्वेषस्यापि, आर्षत्वादाकारः, यद्वा आ-ईषदपि अ इति निस्वादः आ अस्वादः, कस्य ?-रागस्येति-धर्मरागस्य १४ 'निल०' निलयो-गेहं, केषां ?-दुश्चरित्राणां भूयङ्गमचौरभगिनीवीरमतीवत् १५ 'माई०' मातृकायाः समूहः कमलश्रेष्ठिसुतापद्मिनीवत् १६ 'ख०' स्खलना-खण्डना ज्ञानस्यश्रुतज्ञानादेः, उपलक्षणाच्चारित्रादेः, रण्डाकुरण्डामुण्डिकादिबहुप्रसङ्गे तदभावत्वादर्हन्नकक्षुल्लकवत् १७ 'चल०' चलनं शीलस्य-ब्रह्मव्रतस्य, ब्रह्मचारिणां तस्याः सङ्गे तन्न तिष्ठतीतिभावः १८ 'विग्घो०'त्ति विघ्नः-अन्तरायः धर्मस्यश्रुतचारित्रादेः १९ 'अरि०' अरिः-निर्दयो रिपुः, केषां ?-साधूनां-मोक्षपथसाधकानां, चारित्रप्राणविनाशहेतुत्वात् महानरककारागृहप्रक्षेपकत्वाच्च कूलवालुकस्य मागधिकावेश्यावत् २० 'दूष०' दूषणं-कलङ्कः, केषां ?-'आया०' ब्रह्मव्रताद्याचारोपपन्नानां २१ आरामः-कृत्रिमवनं, कस्य ?-कर्मरजसः-कर्मपरागस्य, यद्वाकर्म च-निबिडमोहनीयादि रश्च-कामः चश्च-चौरः कर्मरचं तस्यारामो-वाटिका २२ 'फलिहो'त्ति अर्गला यद्वा झंपकः मोक्षमार्गस्य-शिवपथस्य २३ भवनं-गृहं दारिद्र्यस्य कृतपुण्यकाश्रितवेश्यावत् २४ 'अवि याओ इमाओ'त्ति अपि च इमा-वक्ष्यमाणाः स्त्रियः एवंविधाः भवन्ति, 'आसीविसो विव कु०' वियशब्दो इवार्थे, आशीविषवत्-दंष्ट्राविषभुजङ्गमवत् कुपिताः-कोपं गताः भवन्ति २५ मत्तगज-उन्मत्तमतंगज इव मदनपरवशा मन्मथविह्वला भवन्ति, अभयाराज्ञावत् २६ 'वग्घी०' व्याघ्रीवत् दुष्टहृदयाः-दुष्टचित्ताः, पालगोपालापरमातामहालक्ष्मीवत् २७ 'तण०' तृणछन्नकूप इव-तृणसमूहाच्छादितान्धुवत् अप्रकाशहृदयाः, शतकश्रावकभार्यारेवतीवत् २८ 'माया' मायाकारक इव-परवञ्चकमृगादिबन्धक इवोपचारशतेन बन्धनशतप्रयोक्त्र्यः, तत्रोपचारशतानि-औपचारिकवचनचेष्टादिशतानि बन्धनानि रज्जुस्नेहादिबन्धनशतानीव तेषां 'पउत्तीउ'त्तिकर्त्र्यः २८ 'आयरि०' अत्रापि विवशब्द इवार्थे, आचार्यसविधमिव-अनुयोगकृत्समीपमिव बहुभिः-अनेकप्रकारैरने-

कपुरुषैर्वा ग्राह्यः–ग्रहीतुं शक्यः यद्वाऽऽर्षत्वात् 'अगिज्झु'त्ति अग्राह्यः सर्वथा ग्रहीतुमशक्यः सद्भावः–आन्तरचित्ताभिप्रायो यासां ताः बहुग्राह्यसद्भावाः बहुअग्राह्यसद्भावा वा २९ 'फुंफुं०'फुंफुकः–करीषाग्निः कोउ इतिजनोक्तिस्तद्वत् अन्तो दहनशीलाः पुरुषाणामन्तो दुःखाग्निज्वालनात्, उक्तञ्च–"पुत्रश्च मूर्खो विधवा च कन्या, शठं च मित्रं चपलं कलत्रम् । विलासकालेऽपि दरिद्रता च, विनाऽग्निना पञ्च दहन्ति देहम् ॥ १ ॥" ३० 'नग्ग०' विषमपर्वतमार्गवत् अनवस्थितचित्ताः नैकत्रस्थापितान्तःकरणा इत्यर्थः, अनङ्गसेनसुवर्णकारजीवस्त्रीवत्, यद्वा नग्नकमार्गवत्–जिनकल्पिपन्थवत् नैकत्रचित्ताः यद्वा नग्नकमार्गवत्–भूतावेष्टिताचारवत् नैकत्रचित्ताः ३१ 'अंतोदु०' अन्तर्दुष्टव्रणवत् कुथितहृदयाः, तिलभटोन्मत्तरामावत् ३२ 'किण्ह०' कृष्णसर्पवत् 'अवि०' विश्वासं कर्त्तुमयोग्या इत्यर्थः ३३ 'संघा०' संहारवत्–बहुजन्तुक्षयवत् 'छन्नमाया०' प्रच्छन्नमातृकाः ३४ 'संझ०' सन्ध्याभ्ररागवत् मुहूर्त्तरागाः तथाविधदुष्टवेश्यावत् ३५ 'समुद्द०' समुद्रवीचिवत्–सागरतरङ्गवत् चलस्वभावाः–चञ्चलस्वाभिप्रायाः ३६ 'मच्छो०' मत्स्यवत् दुष्परिवर्त्तनशीलाः महता कष्टेन परिवर्त्तनं–पश्चाद् वालयितुं शीलं–स्वभावो यासां तास्तथा ३७ 'वान०' वानरवत् चलचित्ताः–चञ्चलाभिप्रायाः ३८ 'मच्चुवि०' मृत्युवत्–मरणवत् निर्विशेषाः–विशेषवर्जिताः ३९ 'कालो'त्ति दुर्भिक्षकालः एकान्तदुष्षमाकालो वा यद्वा लोकोक्तौ दुष्टसर्पः तद्वन्निरनुकम्पाः–दयांशवर्जिताः, कीर्त्तिधरराजभार्यासुकोसलजननीवत् ४० 'वरु०' वरुणवत् पाशहस्ताः पुरुषाणामालिङ्गनादिभिः कामपाशबन्धनहेतुहस्तत्वात् ४१ 'सलिल०' सलिलमिव–जलमिव प्रायो नीचगामिन्यः स्वकान्तनृपनदीप्रक्षेपिकाधमपङ्गुकामुकीराज्ञीवत् ४२ 'किव०' कृपणवत् उत्ता-



नहस्ताः सर्वेभ्यो मातापितृबन्धुकुटुम्बादिभ्यो विवाहादावादानहेतुत्वात् ४३ 'नरउ०' नरकवत् उत्रासनीयाः,दुष्टकर्मकारित्वात् महाभयङ्कराः लक्षणासाध्वीजीववेश्यादासीघातिकाकुलपुत्रभार्यावत् ४४ 'खरो०' खरवत्–विष्ठाभक्षकगर्दभवत् दुःशीलाः–दुष्टाचाराः, निर्लज्जत्वेन यत्र तत्र ग्रामनगरारण्यमार्गक्षेत्रगृहोपाश्रयचैत्यगृहगर्त्तावाटिकादौ पुरुषाणां वाञ्छाकारित्वात्, तथाविधवेश्यादुष्टदासीरण्डिकामुण्डिकादीनामिव ४५ 'दुट्टस्सो०' दुष्टाश्ववत्–कुलक्षणघोटकवत् दुर्दमाः सर्वप्रकारैर्निर्लज्जीकृताः, अपि–पुनः पुरुषसंयोगे स्वकामाभिप्रायकर्षणहेतुत्वात् ४६ 'बालो' बालवत्–शिशुवत् मुहूर्त्तहृदयाः, मुहूर्त्तानन्तरं प्रायोऽन्यत्र रागधारकत्वात्, कपिलब्राह्मणासक्तदासीवत् ४७ 'अंधका०' कृष्णभूतेष्टादिभवमन्धकारं अरुणवरसमुद्रोद्भवतमस्कायं वा तद्वद् दुष्प्रवेशा मायामहान्धकारगहनत्वेन देवानामपि दुष्प्रवेशत्वात् ४८ 'विस०' विषवल्लीवत्–हालाहलविषलतावत् 'अण०' अनाश्रयणीयाः–सर्वथा सङ्गादिकर्त्तुमयोग्याः, तत्कालप्राणप्रयाणहेतुत्वात्, पर्वतकराज्ञो नंदपुत्रीविषकन्यावत् ४९ 'दुट्ठ०' दुष्टग्राहा–निर्दयमहामकरादिजलजन्तुसेवितवापीवत् अनवगाह्याः–महता कष्टेनापि अप्रवेशयोग्याः सुदर्शनश्रेष्ठिवत् ५० 'ठाण०' स्थानभ्रष्टः ईश्वरो–ग्रामनगरादिनायकस्तद्वत् यद्वा स्थानं–चारित्रगुरुकुलवासादिकं तस्मात् भ्रष्टः ईश्वरः–चारित्रनायकः साधुरित्यर्थः तद्वत्, यद्वा स्थानं–सिद्धान्तव्याख्यानरूपं तस्मात् भ्रष्टः, उत्सूत्रप्ररूपणेन, ईश्वरो–गणनायक आचार्य इत्यर्थः तद्वत्, यद्वा स्थानभ्रष्टो–दुष्टाचारे रक्त इत्यर्थः, ईश्वरः–सत्यकीविद्याधरस्तद्वत्, अप्रशंसनीयाः–साधुजनैः प्रशंसां कर्त्तुं योग्या नेत्यर्थः ५१ 'किंपाग०' किंपाकफलमिव–विषवृक्षफलमिव मुखे–आदौ मधुराः महाकामरसोत्पादकाः परं पश्चाद्विपाकदारुणाः ब्रह्मदत्तचक्रि-

वत् ५२ 'रित्तमुट्ठी०' रिक्तमुष्टिवत्–पोल्कमुष्टिवत् बाललोभनीयाः–अव्यक्तजनभोलनयोग्याः वल्कलचीरितापसवत् ५३ 'मंस०' मांसपेसीग्रहणमिव सोपद्रवाः, यथा केनापि सामान्यपक्षिणा कुतश्चित्स्थानात् मांसपेसी प्राप्ता तस्यान्यदुष्टपक्षिकृताः अनेके शरीरपीडाकारिण उपद्रवा भवन्ति तथा रामाग्रहणेऽनेके इहभवे परभवे च दारुणा उपद्रवा जायन्ते, यद्वा यथा मत्स्यानां मांसपेसीग्रहणं सोपद्रवं तथा नराणामपि स्त्रीग्रहणमित्यर्थः ५४ 'जलि०' अमुञ्चन्ती–अत्यज्यमाना 'जलियचुडिलीविव' प्रदीप्ततृणपूलिकेव 'दहनसीला' ज्वालनस्वभावा ५५ 'अरि०' अरिष्ठमिव निबिडपापमिव दुर्लङ्घनीयाः ५६ 'कूड०' कूटकार्षापण इव असत्यनाणकविशेष इव कालविसंवादनशीलाः–कालविघटनस्वभावाः अकालचारिण्य इत्यर्थः ५७ 'चंड०' चण्डशील इव–तीव्रकोपीव दुःखरक्षिताः ५८ 'अतिविसाउ'त्ति अतिविषादाः दारुणविषादहेतुत्वात्, यद्वा 'अती'ति अतिक्रान्तो गतोऽकार्यकरणे विषादः–खेदो यासां तास्तथा, यद्वा अतीति—भृशं विषं अतिविषं अतिविषं आ–समन्तात् ददति पुरुषाणां सूरीकान्तावत् यास्ताः अतिविषादाः, यद्वा अतीति भृशं 'वी'ति नानाविधः स्वादो–विषयलाम्पट्यं यासां ता अतिविस्वादाः, अथवा अतिविषयात्–प्रबलपञ्चेन्द्रियलाम्पट्यात् षष्ठीं नरकभूमिं यावत् सुसढमातृवत् गच्छन्ति यास्ता अतिविषयगाः, प्राकृतत्वाद्यकारलोपे सन्धिः, यद्वा स्वेन्द्रियविषयाप्राप्तौ अतिविषादः–तीव्रखेदो यासां ताः अतिविषादाः, यद्वा अतिकोपात् अतिविषं–तीव्रविषमदन्ति–भक्षयन्तीति अतिविषादा इति, यद्वा अतिवृषं–तीव्रं पुण्यं येषां ते अतिवृषा–मुनयस्तेषामा–समन्तात् वसत्यन्तो बहिश्च 'कायंते' यमायंते यम इवाचरंति चारित्रप्राणकर्षणत्वेन यास्ता अतिवृषाकाः, यद्वा–'कायंति' अग्न-



यन्ति समितिगृहज्वालनेन यास्ता अतिवृषाकाः, यद्वा–लोकानामतिवृषे–तीव्रपुण्यधने आ–भृशं चायंति–चौर इवाचरन्ति यास्ता अतिवृषाचाः ५९ 'दुगुं०' जुगुप्सनीया जुगुप्सां कर्त्तुं योग्याः मुनीनां ६० 'दुरु०' दुरुपचाराः–दुष्टोपचाराः–दुष्टोपचारान्वितवचनादिविस्तारो यासां तास्तथा ६१ अगंभीराः–गांभीर्यादिगुणरहिताः ६२ 'अवि०' अविश्वसनीया–विश्रम्भं कर्त्तुं योग्या न ६३ 'अण०' अनवस्थिता, नैकस्मिन् पुरुषे तिष्ठन्तीत्यर्थः ६४ दुःखरक्षिताः–कष्टेन रक्षणयोग्या यौवनावस्थायाम् ६५ दुःखपालिता–दुःखेन पालयितुं शक्याः बालावस्थायाम् ६६ अरतिकराः–उद्वेगजनकाः ६७ कर्कशाः–इह परत्र च कर्कशदुःखोत्पादकत्वात् ६८ दृढवैराः–इह परत्र च दारुणवैरकारणत्वात् ६९ रूपसौभाग्यमदोन्मत्ताः, तत्र रूपं–चार्वाकृतिः सौभाग्यं–स्वकीर्तिश्रवणादिरूपं मदो–मन्मथजगर्वः ७० 'भु०' भुजगगतिवत् कुटिलहृदयाः ७१ 'कंता०' कान्तारगतिस्थानभूताः–कान्तारे–दुष्टश्वापदाकुले महारण्ये गतिश्च–एकाकित्वेन गमनं स्थानं च–एकाकित्वेन वसनं तयोर्भूताः–तुल्याः, दारुणमहाभयोत्पादकत्वात् ७२ 'कुल०' कुलस्वजनमित्रभेदनकारिकाः–वंशज्ञातिसुहृद्विनाशजनिकाः ७३ 'पर०' परदोषप्रकाशिकाः–अन्यदोषप्रकटकारिकाः ७४ 'कय०' कृतं–वस्त्राभरणपात्रादि प्रदत्तं घ्नन्ति–सर्वथा नाशयन्तीत्येवंशीलाः कृतघ्नाः ७५ 'बलसों०' बलं–पुरुषवीर्यं प्रति सङ्गेऽसङ्गे वा शोधयन्ति–गालयन्तीत्येवंशीलाः बलशोधिकाः, यद्वा बलेन–स्वस्वामर्थ्यलक्षणेन निशादौ जारपुरुषादीनां शोधिकाः–तच्छुद्धिकारिकाः बलशोधिकाः यद्वा बवयो रलयोरैक्यात् वरशोधिकाः स्वेच्छया पाणिग्रहणकारित्वात् धम्मिल्लस्त्रीवृन्दवत् ७६ 'एकं०' एकान्ते–विजने हरणं नेतव्यपुरुषाणां विषयार्थमेकान्तहरणं यद्वा एकान्ते–दूरग्रामनगरदेशादौ स्वकुटुम्बादिजनरहिते हरणं–तत्र

पुरुषाणां विषयार्थं लात्वा गमनमित्यर्थः, तत्र कोलाः–वनशूकरतुल्याः, यथा शूकरः कमपि सारं कन्दादिकं भक्ष्यं प्राप्य विजने गत्वा भक्षयति तथेमाः ७७ चञ्चलाः–चपलाः ७८ 'जोइभंडोवरागो विव मुहरागविरागाओ'त्ति ज्योतिर्भाण्डोपरागवत्–अग्निभाजनसमीपरागवत् मुखरागविरागाः यथाऽग्निभाजनसमीपं मुखं रागवत् भवति अन्ते विरागं तथेमाः यद्वा 'जोइभंडो विव रागाओत्ति०' पाठे तु ज्योतिर्भाण्डस्येवोपरागाः, यथा ज्योतिर्भाण्डं–अग्निभाजनं उप–समीपे रागवत् भवति तथेमा वस्त्रादिभिरुप–समीपे रागवत्यो भवन्तीत्यर्थः ७९ 'अवि याइंति०' अपिचेत्यभ्युच्चये 'आइं'ति वाक्यालङ्कारे 'ताओ' ताः स्त्रियः 'अंतरं' अन्तरङ्गभङ्गशतं–अभ्यन्तरविघटनशतमस्याः पक्षपाते पुरुषस्य परस्परं मैत्र्यादिविनाशहेतुत्वात्, यद्वा अन्तः–मध्ये 'रंग०'ति पुरुषाणां ब्रह्मव्रतचारित्रादिरागस्तस्य भङ्गशतं तस्य विघ्नहेतुत्वात् ८० अरज्जुकः पाशः रज्जुकं विना बन्धनमित्यर्थः ८१ 'अदारुय'त्ति अदारुका–काष्ठादिरहिता अटवी–कान्तारं, यथा अदारुकाऽटवी मृगतृष्णाहेतुर्भवति तथेमाः यद्वा काष्ठादिरहिताऽटवी कदापि न ज्वलति तथेमाः पापं कृत्वा न ज्वलन्ति, न पश्चात्तापं कुर्वन्तीत्यर्थः, वृषभकलङ्कदात्रीश्रावकभार्यावत् ८२ 'अणाल०' न आलस्यं–अनुत्साहोऽनालस्यं तस्य निलयः, अकार्यादौ सादरं प्रवृत्तिहेतुत्वात् ८३ 'अइक्ख०' ईक्ष दर्शनाङ्कनयो'रितिवचनात् अनीक्ष्यवैतरणी–अदृश्यवैतरणी परमाधार्मिकविकुर्वितनरकनदी तत्सङ्गे तदवाप्तिहेतुत्वात्, अतीक्ष्णवैतरणी वा ८४ 'अणा०' अनामिको–नामरहितो

१ 'जाइअभंडोवगारोविव मुहरागविरागाओ' इत्यपि पाठः व्याख्या च तत्र—जात्यभाण्डोपकारवत् मुखरागविरागाः यथा जातिभाण्डस्य उपकारावसरे स्तुतिकरणरूपो मुखरागो भवति अन्तश्च विरागो—रागाभावः एवं स्त्रीजनस्यापीतिभावः, युक्तश्चायं पाठः



व्याधिः–असाध्यरोगः इह परत्र च तत्कारणत्वात् ८५ 'अविओ०' न विद्यते वियोगः–पुत्रमित्रादिविरहो यत्र सः अवियोगः एवंविधो विप्रलापः–परिदेवनं ८६ 'अरु०' अरुक्–रोगरहितः उपसर्गः, यद्वाऽर्षत्वाद् वकारलोपे अरूपो–रूपरहितः उपसर्गः–उपपातः ८७ 'रइ' रतिः–कामप्रिया विद्यते अस्येति रतिमान् कन्दर्पोऽयमिति चित्तभ्रमः चित्तभ्रमकारणत्वात्, यद्वा रतिमान्–सुखदायी मनोभ्रमो–मनोविकारः ८८ 'सव्वंग०' सर्वाङ्गः–सर्वशरीरव्यापी दाहः ८९ 'अणब्भया वज्जासणी'ति अनभ्रका–अभ्रकरहिता वज्राशनिः–विद्युत्, यद्वा इयं–स्त्री 'असणी'त्ति अशनिः–विद्युत्, किंभूता ?–अनभ्रका–आकाशरहिता मेघरहिता वा, पुनः किंभूता ?–वज्रा–वज्रतुल्येत्यर्थः, दारुणविपाकहेतुत्वात्, 'अपसूया वज्जासणी'ति पाठे अप्रसूता–अपत्यजन्मरहिता वज्जेति वर्या–सुन्दराकारा एवंविधा रामा असणीति–अशनिः–विद्युत्, बालानां नरकादौ दारुणदहनहेतुत्वात् 'अप्पसूया वज्जासुणी'त्ति पाठे तु अप्रसूता–नवयौवना परिणीता अपरिणीता वा सालङ्कारा अनलङ्कारा वा मुण्डा अमुण्डा वा एवंविधा रामा 'सुणी'ति हडुकिलाशुनीवत्–मण्डलीवत् 'वज्जे'ति वर्ज्या सर्वथा साधुभिर्मोक्षकाङ्क्षिभिः ब्रह्मचारिभिश्च–चतुर्थव्रतरक्षाकाङ्क्षिभिः वर्जनीयेत्यर्थः कायवाङ्मनोभिरिति ९० 'असलि०' अजलप्रवाहः 'असलिलप्पलावो'त्ति पाठान्तरं अजलप्लावः–जलं विना रेलिरित्यर्थः ९१ 'समुद्दरउ'त्ति समुद्रवेगः केनापि धर्तुमशक्यत्वात् 'समद्धरउ'त्ति पाठे तु सम्यक् अर्धं यस्मात् स समर्धः, एवंविधः 'रउ'त्ति वेगः परमस्नेहवतां बान्धवानां परस्परं स्त्रीकलहे सति गृहाद्यर्धकरणहेतुत्वात्, भद्रातिभद्राख्यौ श्रेष्ठिपुत्राविव ९२

अवि याइं तासिं इत्थियाणं अणेगाणि नामनिरुत्ताणि पुरिसे कामरागपडिबद्धे नाणाविहेहिं उवायसयसहस्सेहिं वहबंधणमाणयंति पुरिसाणं नो अन्नो एरिसो अरी अत्थित्ति नारीओ, तंजहा-नारीसमा न नराणं अरीओ नारीओ, नाणाविहेहिं कम्मेहिं सिप्पियाईहिं पुरिसे मोहंतित्ति महिलाओ, पुरिसे मत्ते करंतित्ति पमयाओ, महंतं कलिं जणयंतित्ति महिलियाओ, पुरिसे हावभावमाईहिं रमंतित्ति रामाओ, पुरिसे अंगाणुराए करंतित्ति अंगणाओ, नाणाविहेसु जुद्धभंडणसंगामाडवीसु मुहाणगिण्हणसीउण्हदुक्खकिलेसमाईसु पुरिसे लालंतित्ति ललणाओ, पुरिसे जोगनिओएहिं वसे ठावंतित्ति जोसियाओ, पुरिसे नाणाविहेहिं भावेहिं वण्णंतित्ति वणियाओ, काई पमत्तभावं काई पणयं सविब्भमं काई ससद्दं सासिव्व ववहरंति काई सत्तुव्व रोरो इव काई पयएसु पणमंति काई उवणएसु उवणमंति काई कोउयनमंति काई सुकडक्खनिरिक्खिएहिं सविलासमहुरेहिं उवहसिएहिं उवगूहिएहिं उवसद्देहिं गुरुगदरिसणेहिं भूमिलिहणविलिहणेहिं च आरुहणनत्तणेहिं च बालयउवगूहणेहिं च अंगुलिफोडणथणपीलणकडितडजायणाहिं तज्जणाहिं च अवि याइं ताओ पासो व ववसिउं जे पंकुव्व खुप्पिउं जे मच्चुव्व मरिउं जे अगणिव्व डहिउं जे असिव्व छिज्जिउं जे ( सूत्रं १९ )

'अवि याइं'ति पूर्ववत् 'तासिं इ०' तासामुक्तवक्ष्यमाणानां स्त्रीणामधमाधमानां दासीकुरण्डादीनामनेकानि-विविधप्रकाराणि नामनिरुक्तानि-नामपदभञ्जनानि भवंति, 'पुरिसे' इत्यादि यावत् 'नारीउ'त्ति 'नारीओ'त्ति खण्डयति,



कथम्?-ना आ अरी इति, ना इति नानाविधैरुपायशतसहस्रैः कामरागप्रतिबद्धान् पुरुषान् वधबन्धनं प्रति आ इति-आणयंति-प्रापयन्ति अरीति पुरुषाणां च नान्य ईदृशः अरिः-शत्रुः अस्तीति नार्यः, 'तंजह'त्ति तत्पूर्वोक्तं यथेति-दर्शयति-'नारी०' नारीणां समा न नराणामरयः सन्तीति नार्यः १ नानाविधैः कर्मभिः-कृषिवाणिज्यादिभिः शिल्पकादिभिश्च-कुम्भकार १ लोहकार २ तन्तुवाय ३ चित्रकार ४ नापित ५ विज्ञानैः पुरुषान्मोहयन्तीति-मोहं प्रापयन्तीति धातूनामनेकार्थत्वात् विडम्बयंतीत्यर्थः इति महिलाः, यद्वा नानाविधैः कर्मभिः-मैथुनसेवादिभिः शल्यादिभिश्च मस्तकादौ कवर्यादिविज्ञानैः पुरुषान्-बालनरान् मोहयन्तीति-आत्मसात्कुर्वन्तीति स्वस्वार्थपूरणायेति महिलाः २ 'पुरि०' पुरुषान् मत्तान्-उन्मत्तान् मुक्तगुरुजनकजननीबान्धवभगिनीमित्रादिलज्जादीन् कुर्वन्तीति प्रमदाः ३ महान्तं कलिं-राटिं जनयन्ति-उत्पादयन्तीति महिलिकाः ४ 'पुरि०' पुरुषान् हावभावादिभिः मकारोऽलाक्षणिकः रमयन्ति-क्रीडयन्तीति रामाः, श्रीअरिष्टनेमिना सह गोविंदनितम्बिनीवत्, तत्र हावाः-कामविकाराः भावाः-भावसूचका अभिप्रायाः आदिशब्दात् विलासा नेत्रविकारादयः ५ 'पुरि०' पुरुषान्, किंभूतान्?-अङ्गे-स्वशरीरे पयोधरनितम्बजघनस्मरकूपिकादिरूपे अनुरागो येषां ते अनुरागास्तानङ्गानुरागान् कुर्वन्तीत्यङ्गनाः ६ 'नाणा०' नानाविधेषु युद्धभण्डनसङ्ग्रामाटवीषु मुधार्णग्रहणशीतोष्णदुःखक्लेशादिषु पुरुषान् लालयन्ति-विविधं कदर्थयन्तीति ललनाः, तत्र युद्धं-मुष्ट्यादिना परस्परताडनं, भण्डनं-वाक्कलहः, सङ्ग्रामः-कुन्तादिना महाजनसमक्षकलहः, अटवी-अरण्यं तत्र भ्रामणादिकारापणेन मुधा-निष्फलं ऋणं-उद्धारस्तत्कारापणेन यद्वा मुधा-निष्फलं 'अण'मिति शब्दकरणगाल्यादिप्रदानं

तेन 'गिण्हणन्ति' कामातुरादिप्रकारेण पुरुषग्रहणं तेन शीतेन कोपाटोपात् माघमासादौ वस्त्रोद्दालनगृहबहिःकर्षणादिना उष्णेन-स्वकार्यकारापणेनातपादौ भ्रामयन्ति दुःखेनापत्यादिभरणादिपीडादर्शनेन क्लेशेन-रामाद्वित्र्यादियोगे सति परस्परकलहोत्पादनेन, आदिशब्दादन्यैरप्यनाचारसेवाद्यनर्थोत्पादनैः पुरुषान् पीडयन्तीति ललनाः ७ 'पुरि०' पुरुषान् योगाः-बाह्याः स्ववाक्कायोद्भवव्यापाराः हास्यकरणाङ्गविक्षेपादयः नियोगाः-आन्तराः स्वमनसि भवाः कामविकारादयस्तैर्योगनियोगैः वशे-स्ववशे स्थापयन्ति-रक्षयन्तीति योषितः, यद्वा पुरुषान् योगनियोगैः-कार्मणवशीकरणादिप्रकारैः स्ववशे स्थापयन्तीति योषितः 'पुरि०' पुरुषान् नानाविधैः भावैः-अभिप्रायविलासादिभिर्वर्णयन्ति कामोद्दीपनगुणान् विस्तारयन्तीति वनिताः ९ 'काई पमत्तभावं०'ति काश्चित् कामिन्यः प्रकर्षेण मत्तभावं-उन्मत्तभावं व्यवहरन्ति—प्रवर्त्तयन्ति पुरुषाणां पातनार्थं 'काई०' काश्चित् प्रकर्षेण जनं नम्रत्वं-प्रणतं कुर्वन्ति, किंभूतं ?-सहविभ्रमेण-सविलासेन वर्त्तते यत्तत्सविभ्रमं पुरुषाणां पाशबन्धनार्थं 'काई०' 'ससद्दं सासिव ववहरंति'त्ति काश्चित् सशब्दं यथा स्यात्तथा व्यवहरन्ति-स्वचेष्टां दर्शयन्तीत्यर्थः, क इव ?-'सासिव' श्वासोच्छ्वासरोगिवत् , पुरुषाणां स्नेहभावोत्पादनार्थं, 'काई०' काश्चित् शत्रुवत् प्रवर्त्तयन्ति मारणार्थं मर्मस्थानग्रहणेन, यद्वा स्वभर्त्रादीनां भयोत्पादनार्थं रिपुवत् प्रवर्त्तयन्ति, 'रोरो इव का०' काश्चित्कामतृष्णातृषिता रोर इव-रङ्क इव रंकपुरुषाणामपि पादयोः पादान् वा प्रणमन्ति-लगन्तीत्यर्थः, 'काई०' काश्चिदुपनतैः नृत्यप्रकारैरुपनमन्ति सकलाङ्गादिदर्शनार्थं, 'काई कोउ०' काश्चित् कौतुकं-वचननयनादिभावं कृत्वा-

१ काश्चित् सेविता लासं प्रणयं स्नेहं व्यवहरन्ति पुरुषाणां पाशबन्धनार्थं इत्यपि ।

विधाय नमन्ति नराणां हास्याद्युत्पादनार्थं, 'काइ'इति पदमग्रेऽपि योज्यम् 'सुकडनिरिक्खिएहिं'ति काश्चित् सुकटाक्षनिरीक्षितैः-सुष्ठुनेत्रविकारनिरीक्षणैः बालान् पातयन्तीति शेषः, 'सविलासमहुरेहिं'ति सविलासानि च-विलाससहितानि मधुराणि च सविलासमधुराणि एवंविधानि गीतानि वचनानि चेति शेषस्तैः काश्चित् पुरुषान् मोहयन्तीति, 'उपहसिएहिं'न्ति उपहसितैः काश्चित् हास्यचेष्टाकरणैः कामिनां हास्यमुत्पादयन्तीति, 'उवगूहिएहिं'ति उपगृहितानि-पुरुषस्यालिङ्गनलिङ्गग्रहणकरग्रहणादीनि तैः काश्चित् नराणां स्वप्रेमभावं दर्शयन्तीति, 'उवसद्देहिं'ति उपशब्दानि-सुरतावस्थायां वलवलायमानादीनि प्रच्छन्नसमीपशब्दकरणानि वा तैः काश्चित् कामिनां कामरागं प्रकटयन्तीति, 'गुरुगदरिसणेहिं'त्ति गुरुकाणि च प्रौढानि-पयोधरनितम्बादीनि स्थूलोच्चत्वात् सुन्दराणि वा यानि दर्शनानि च—आकृतयस्तानि गुरुकदर्शनानि तैर्दूरस्था एव काश्चित् कामिनः स्ववशे कुर्वन्तीति १ यद्वा 'गु'इति गुह्यप्रकाशनेन पुरुषं पातयन्ति, यद्वा गु-इति गुरुं स्वजनकभर्त्रादिकमपि विप्रतार्याकार्ये प्रवर्त्तयन्ति, 'रु'इति रुदनकरणेन पुरुषं सस्नेहं कुर्वन्ति २ 'ग०'इति स्वपितुर्गृहगमनादिप्रस्तावे पुरुषमत्यन्तं रागवन्तं कुर्वन्तीति ३ 'द'इति दर्शनेन रक्तकृष्णादिदन्तदर्शनेन कामिनो मोहयन्तीति ४ 'रि'इति सम्भाषणे रे मां मुञ्च रे ! मां मा कदर्थयेत्यादिकथनेन कुरामाः पुरुषं सकामं कुर्वन्तीति आर्षत्वात् 'रि'इति यद्वा अरि इति रतिकलहे-अरे मया सह मा कुरूपहासमित्यादिरतिकलहकरणेन पुरुषं क्रीडयन्तीति आर्षत्वात् अरि इति ५ 'स'इति अन्योक्तश्रृङ्गारगीतादिशब्दकरणेन साधूनपि सकामान् कुर्वन्तीति ६ 'ण'इति सकज्जलसविकारसजलाभ्यां नेत्राभ्यां पुरुषं सकामं स्ववशं सगद्गदं स्वकार्यकर्त्तारमपराधमोक्तारं कुर्वन्तीति

गुरुगदरिसणेहिं । 'भूमिलिहणविलिहणेहिं चे'ति भूमिलिखनानि–भूमौ पादादिनाऽक्षरलेखनानि विलिखनानि–विशेषतो रेखास्वस्तिकादिकरणानि तैः स्वगुह्यं पुरुषाणां ज्ञापयन्ति इति भूमि(लेखनवि)लेखनैरिति चकारौ अत्र समुच्चयार्थौ 'आरुहणनट्टणेहिं च'त्ति आरुहणानि–वंशाग्रादिचटनानि नर्तनानि–भूमौ नृत्यकरणानि तैः आरुहणनर्त्तनैः पुरुषादिकमाश्चर्यवन्तं कुर्वन्तीति, 'वालयउवगूहणेहिंचे'ति वालकाः–मूर्खाः कामिन इत्यर्थः तेषामुपगूहनानि–प्रच्छन्नरक्षणादीनि तैर्बालकोपगूहनैः कुरण्डाः स्वकामेच्छां पूरयन्तीति, यद्वा वालकाः–केशकलापास्तेषामुपगूहनानि–रचनास्वच्छवस्त्राच्छादितादीनि तैर्मन्मथग्रस्तानधमाधमान् स्ववशे कृत्वा वलिवर्दवत् वाहयन्तीति, चशब्दात् कपिवत् भ्रामयन्ति, अश्ववारयन्ति–श्रेणिकभार्याधनश्रीराज्ञीवत्, स्वार्थाप्राप्तौ प्राणत्यागमपि कुर्वन्तीति, 'अंगुलि०' अङ्गुलिस्फोटनानि–कडिकाकरणानि यद्वा अङ्गुलीनां परस्परं 'ताडनानि' स्तनपीडनानि–कराभ्यां पयोधरचम्पनानि हस्ताभ्यां कुचमर्दनानि वा कटितटयातनानि–श्रोणिभागपीडनानि कराभ्यां वक्रगत्या वा तैः कामिनां चित्तान्यान्दोलयन्तीति, 'तज्जणाहिं चे'ति तर्जनानि–अङ्गुलिमस्तकतृणादिचालनानि तैर्मन्मथपीडामुत्पादयन्ति कामिनां, चशब्दादुद्घटनेपथ्यकरणैराभरणशब्दोत्पादनैः सविलासगत्या चतुष्पथादौ प्रवर्त्तनैरित्याद्यनेकप्रकारैर्नरान् बइल्लतुल्यान् कुर्वन्त्यतः संयमार्थिभिः साधुभिरासां सङ्गस्त्याज्यः सर्वथा सर्वदैव इति । तथा 'अवि याइं'ति पूर्ववत् 'ताओ पासो व ववसिउं जे'इति 'जे'इति प्राकृतत्वात् लिङ्गव्यत्ययः याः कुरण्डादयः स्त्रियः सन्ति जगति 'ताउ'त्ति ताः पुरुषान् पाशवत्–नागपाशवागुरादिवन्धनवत् 'ववसितुं०' धातूनामनेकार्थत्वात् बन्धितुं वर्त्तन्ते, इह परभवे नराणां बन्धनकारणत्वात्, 'पंकुव खुप्पिउं जे'त्ति 'ताउ'त्ति अग्रेऽप्यनुवर्त्तते, याः कुलटादयः सन्ति विश्वे ताः नरान् पङ्कवत्–अगाधार्द्रबहुलसमुद्रादिकर्दमवत् 'खुप्पिउं०' क्षेप्तुं खूचयितुं वर्त्तन्ते, 'मच्चुव मरिउं जे'त्ति याः स्वैरिण्यादयः सन्ति ताः नरान् मृत्युवत्–कृतान्तवत् 'मर्त्तुं' मारणार्थमित्यर्थः मारयितुं प्रवर्त्तन्ते, 'अगणिव डहिउं जे'त्ति या जगति गणिकादयः सन्ति ताः कामिनः अग्निवत् दग्धुं–ज्वालयितुं परिभ्रमन्ति, 'असिव छिज्जिउं जे'त्ति याः तरुणीपरिव्राजिकादयः सन्ति ताः कौटिल्यकरण्डाः साधूनप्यसिवत्–खड्गवत् छेत्तुं–द्विधाकर्त्तुमुत्सहन्ते । अथ स्त्रीवर्णनं पद्येन वर्णयति यथा—

असिमसिसारच्छीणं कंतारकवाडचारयसमाणं । घोरनिउरंबकंदरचलंतबीभच्छभावाणं ॥ १ ॥ (१२२) दोससयगागरीणं अजससयविसप्पमाणहिययाणं । कइयवपन्नत्तीणं ताणं अन्नायसीलाणं ॥ २ ॥ (१२३) अन्नं रयंति अन्नं रमंति अन्नस्स दिंति उल्लावं । अन्नो कडअंतरिओ अन्नो पडयंतरे ठविओ ॥ ३ ॥ (१२४) गंगाएँ वालुयाए सायरे जलं हिमवओ य परिमाणं । उग्गस्स तवस्स गइं गब्भुप्पत्तिं च विलयाए ॥ ४ ॥ (१२५) सीहे कुडंवुयारस्स पुट्टलं कुक्कुहाइयं अस्से । जाणंति बुद्धिमंता महिलाहियमं न जाणंति ॥ ५ ॥ (१२६) एरिसगुणजुत्ताणं ताणं कइयवसंठियमणाणं । न हु भे वीससियव्वं महिलाणं जीवलोगंमि ॥ ६ ॥ (१२७) निद्धन्नयं च खलयं पुप्फेहिं विवज्जियं व आरामं । निदुद्धियं च धेणुं लोएवि अतिल्लियं पिंडं ॥ ७ ॥ (१२८) जेणंतरेणं निमिसंति लोयणा तक्खणं च विगसंति । तेणंतरेवि हिययं चित्तसहस्साउलं होई ॥ ८ ॥ (१२९)

'असिमसि०' नारीणां सर्वथा विश्वासो न विधेयः, किंभूतानाम् ?—असिमषीसदृक्षीणां—करवालकज्जलतुल्यानां, अयमाशयः—यथा खड्गः पण्डितेतरान् नरान् निर्दयतया छेदयति तथाऽनार्या नार्योऽपि नरानिह परत्र दारुणदुःखोत्पादनेन छेदयन्ति, यथा च कज्जलं स्वभावेन कृष्णं अस्य श्वेतपत्रादिसङ्गमे सति तस्य कृष्णत्वं जनयति तथोन्मत्तनारी स्वभावेन कृष्णा दुष्टान्तःकरणत्वात् तत्सङ्गमे उत्तमकुलोत्पन्नानामुत्तमानामपि कृष्णत्वमुत्पादयति यशोधनक्षयराजविटम्बनादिहेतुत्वात्, पुनः किंभूतानां ?—कान्तारकपाटचारकसमानां—अरण्यकपाटकारागृहतुल्यानाम्, अयमाशयः—यथा गहनवनं व्याघ्राद्याकुलं जीवानां भयोत्पादकं भवति तथा नराणां नार्योऽपि भयं जनयन्ति, धनजीवितादिविनाशहेतुत्वेनेति, यथा प्रतोल्यां कपाटे दत्ते केनापि गन्तुं न शक्यते तथा हृदयप्रतोल्यां नारीरूपे कपाटे दत्ते सति केनापि कुत्रापि धर्मवनादौ गन्तुं न शक्यते, यथा च जीवानां कारागृहं दुःखोत्पादकं भवति तथा नराणां नार्योऽपीति, पुन किंभूतानां ?—'घोरनि०' घोरो—रौद्रः प्राणनाशहेतुत्वात् निकुरम्बं—घनमगाधमित्यर्थः यत्कमिति—जलं तस्मादिव दरो—भयं यस्मात् भावात् साङ्केतपुराधिपदेवरतिराजस्येव स निकुरम्बकन्दरः कमित्यव्ययशब्दः उदकवाचकः, चलन्—पुरुषं पुरुषं प्रति भ्रमन् बीभत्सो—भयङ्करः, इह परत्र महाभयोत्पादकत्वात्, एवंविधो भावः—आन्तरमायावक्रस्वभावो यासां ताः घोरनिकुरम्बकन्दरचलद्बीभत्सभावास्तासां घोरभावानाम् १ 'दोससय०' दोषशतगर्गरिकाणां दोषाः—परस्परकलहमत्सरगालिप्रदानमर्मोद्घाटनकलङ्कप्रदानाजल्प्यजल्पनशापप्रदानस्वपरप्राणघातचिन्तनादयस्तेषां शतानि तेषां गर्गरिकाः—भाजनविशेषास्तासां दोषशतगर्गरिकाणां, 'अजस०' यशसः शतानि यशःशतानि न यशःशतान्ययशःशतानि



तेषु विसर्पत्—विस्तारं गच्छत् हृदयं—मानसं यासां ता अयशःशतविसर्पद्धृदयास्तासां तथा 'कइयव'त्ति कैतवानि कपटानि नेपथ्यभाषामार्गगृहपरावर्त्तादीनि 'पन्नत्ती'ति प्रज्ञाप्यन्ते—प्ररूप्यन्ते याभिस्ताः कैतवप्रज्ञप्तयः, यद्वा कैतवानां दम्भानां प्रकृष्टाः ज्ञप्तयो—ज्ञानानि कमलश्रेष्ठिसुतापद्मिनीवत् यासु ताः कैतवप्रज्ञप्तयः, यद्वा कैतवेषु प्रज्ञाया—बुद्धेराप्तिः—आदानं यासां ताः कैतवप्रज्ञाप्तयस्तासां कैतवप्रज्ञप्तीनां २ कैतवप्रज्ञाप्तीनां वा, तथा 'ताणं'ति तासां नारीणामज्ञातशीलानां—पण्डितैरप्यज्ञातस्वभावानां, यदुक्तं—'देवाण दाणवाणं मंतं मंतंति मंतनिउणा जे । इत्थीचरियंमि पुणो ताणवि मंता कहं नठ्ठा ? ॥१॥ जालंधरेहिं भूमीहरेहिं विविहाहिं अंगरक्खेहिं । निवरक्खियावि लोए रमणी दीसइ पभठ्ठमज्जाया ॥२॥ मच्छपयं जलमज्झे आगासे पंखियाण पयपंती । महिलाण हियमग्गो तिन्निवि लोए न दीसंति ॥३॥"
इति, यद्वा न ज्ञातं—नाङ्गीकृतं शीलं—ब्रह्मस्वरूपं याभिस्ताः अज्ञातशीलास्तासां, यद्वा नञः कुत्सार्थत्वात् कुत्सितं ज्ञातं शीलं साध्वीनां याभिः परिव्राजिकाभिः योगिन्यादिभिस्ता अज्ञातशीलास्तासां मुनिवरैः प्रसङ्गैकान्तजल्पनैकत्रवासविश्वाससहचलनादिव्यापारो वर्जनीय इति २ 'अन्नं रयंति०' द्वित्र्यादिपुरुषसम्भवेऽन्यं—स्वभावसमीपस्थं नरं रजंति—अर्धवीक्षणादिना कामरागवन्तं कुर्वन्तीत्यर्थः, पल्लीपतिलघुभ्रातरं प्रति अगडदत्तस्त्रीमदनमञ्जरीवत्, यद्वा स्वकुशीलत्वे केनापि ज्ञाते सति 'अन्नं रयंति'त्ति अन्यद्—विषभक्षणकाष्ठभक्षणादिकं रचयन्ति—कपटेन निष्पादयन्ति यद्वा जारस्य स्वान्तःकरणज्ञापनाय 'अन्नं रयन्ति'त्ति अन्यदात्मव्यतिरिक्तं—तृणतन्तुदंडादि रदन्ति—उत्पाटनं कुर्वन्तीत्यर्थः, 'रद् विलेखने'इति विलेखनमुत्पाटनमिति, 'अन्नं रमंति'त्ति अन्यं—स्वकान्तव्यतिरिक्तं नरं रमन्ति—मैथुनतत्पराः

क्रीडन्तीत्यर्थः, पातालसुन्दरीवत्, यद्वा 'अन्नं रयंति'त्ति अन्यं-स्वकान्तव्यतिरिक्तं पुत्रभ्रातृकान्तमित्रादिकं प्रति रामा—अधमकामाः रयि गतौ रबु गतौ च रयते रम्बन्ति वा गच्छन्ति तथा द्यूतादिप्रकारेण क्रीडयन्ति वा 'अन्नस्स दिंति उल्लावं'ति अन्यस्य—उक्तव्यतिरिक्तस्य ददति—प्रयच्छन्ति 'उल्लावं'ति वचनं-बोलरूपं यद्वा अनेक-नरपरिवृता अप्यन्यस्य नरस्य मार्गादि गच्छतः स्थितस्य वोत्-प्राबल्येनोल्लापं-मन्मथोद्दीपनशब्दं ददतीति, 'उल्लायं'ति पाठे तु कामिनरद्विस्त्र्यादिसम्भवे सति उन्मत्ताः कुरामाः अन्यस्य ददति उल्लातं-प्रबलपादप्रहारमित्यर्थः, तथा अन्यः कश्चिद् बलिवर्दरूपः कटान्तरितः-कटान्तर्वर्त्ती प्रच्छन्नरक्षितो भवतीति, तथा अन्यस्तत्कटाक्षबाणसमूहेन ग्लानीकृतः पटकान्तरे-वस्त्रविशेषान्तरे स्थापितो भवेत् ग्लानवदिति ॥ ३ ॥ 'गंगाए० सीहे कु०' अनयोर्व्याख्या—गङ्गायां वालुकां-वेलुकणान् सागरे-समुद्रे जलं-जलपरिमाणमित्यर्थः हिमवतो-महाहिमवन्नगस्य परिमाणम्-ऊर्ध्वाधस्तिर्यक्परिधि-प्रतरघनमानं, उग्रस्य-तीव्रस्य तपसो गतिं-फलप्राप्तिरूपां गर्भोत्पत्तिं च 'विलयाए'त्ति वनिताया-नार्याः सिंहे कुण्ड-बुकारमिति रूढिगम्यं पुट्ठलं-निजजठरोद्भवं 'कुकुहाइयं'ति गतिकाले शब्दविशेषं अश्वे—घोटके जानन्ति—अवग-च्छन्ति बुद्धिमन्तः-प्रज्ञावन्तः महिलायाः कूटकपटद्रोहपरवञ्चनपरायाः प्रबलमन्मथाग्निधगधगायमानायाः अतर्कितातु-च्छोच्छलितकलकण्ठोद्गीयमानमधुरगेयध्वनिमृगीकृतमुनिवराया ललाटपट्टतटघटितघनश्रीखण्डतिलकचन्द्रचकोरीकृतच-तुरायाःपीनपयोधरपीठलुठन्निर्मलामलकस्थूलमुक्ताफलहारश्वेतदृग्विषभुजङ्गमगतविवेकचैतन्यकृतानेकपण्डितायाः हृदयं-गूढान्तःकरणं न जानन्ति—न सम्यगवगच्छन्तीति, उक्तञ्च—"स्त्री जातौ दाम्भिकता भीरुकता भूयसी वणि-



ग्जातौ। रोषः क्षत्रियजातौ द्विजातिजातौ पुनर्लोभः ॥ १ ॥ न स्नेहेन न विद्यया न च धिया रूपेण शौर्येण वा, नेर्ष्या-चाटुभयार्थदानविनयक्रोधक्षमामार्दवैः । लज्जायौवनभोगसत्यकरुणासत्त्वादिभिर्वा गुणैर्गृह्यन्ते न विभूतिभिश्च ललना दुःशीलचित्ता यतः ॥ १ ॥" ॥ ४ ॥ ५ ॥ 'एरिसगुण०' ईदृशगुणयुक्तानां—उक्तवक्ष्यमाणलक्षणान्वितानां तासां नारीणां कपिकवत्-वानरवत् (अ)संस्थितमनसां नैव 'भे' भवद्भिः विश्वसितव्यं महिलानां जीवलोके इति ॥ ६ ॥ 'निद्धन्नयं०' यादृशमिति गम्यते, निर्धान्यकं-धान्यकणविवर्जितं 'खलयं'ति धान्यपवित्रीकरणस्थानं तादृशं महिलामण्डलमरमणी-यत्वात् सुखधान्यकणाभावाच्च, यादृशं पुष्पैः-सुगन्धिकुसुमैर्विवर्जितं चारामं तादृशं तरुणीमण्डलं शुभभावनाकुसुमर-हितत्वात्, यादृशा निर्दुग्धिका-दुग्धरहिता धेनुः-गौस्तादृशा भ्रष्टव्रतिनी धर्मध्यानदुग्धाभावात्, तथा लोके अपिशब्दः पूरणार्थे यादृशं 'अतिल्लियं'ति सर्वथा तैलांशरहितं पिण्डं-खलखण्डं तादृशं महिलाव्याघ्रीमण्डलं परमार्थेन स्नेहतैल-विवर्जितत्वात् ॥ ७ ॥ 'जेणंत०' स्त्रीणां येन परमवल्लभेन सर्वार्थसम्प्राप्तिकारकेणान्तरेण-विना लोचनानि-प्रफुल्लने-त्राणि तत्क्षणे 'निमिसंति०' सङ्कुचितभावं गच्छन्तीत्यर्थः, च पुनस्तेनैव परमवल्लभेन स्वार्थप्राप्त्यकारकेणान्तरेण-विना विकसन्ति—प्रफुल्लनेत्राणि भवन्तीत्यर्थः, 'तेणंतरे०'इति प्राकृतत्वात् तृतीयार्थे सप्तमी, अपिशब्द एवार्थे, तथा कुस्त्रीणां हृदयं कदाचित् स्ववल्लभे (न प्रवर्त्तते स्ववल्लभे) सत्यपि कदाचित् तासां चित्तं—स्वमानसं सहस्राकुलं—स्वकान्त-व्यतिरिक्तपुरुषान्तरसहस्रेषु आकुलं मन्मथभावेन परिभ्रमद् भवतीत्यर्थः, शाकिनीवत्, अतो मुनिवरैः—रत्नत्रयरक्षण-

परैर्मुक्तगृहारम्भभरैरासां कुरण्डामुण्डीदासीयोगिन्यादीनां यथा कथञ्चित् परिचयो न कार्य इति । अस्या अन्यदपि व्याख्यान्तरं सद्गुरुप्रसादात् कार्यमिति ॥ ८ ॥ अथोपदेशान्तरं दददाह—

जड्डाणं वड्डाणं निविन्नाणं च निव्विसेसाणं । संसारसूयराणं कहियंपि निरत्थयं होइ ॥ ९ ॥ (१३०) किं पुत्तेहिं पियाहिं वा अत्थेणवि पिंडिएण बहुएणं । जो मरणदेसकाले न होइ आलंबणं किंचि ॥ १० ॥ (१३१) पुत्ता चयंति मित्ता चयंति भज्जावि णं मयं चयइ । तं मरणदेसकाले न चयइ सुविअज्जिओ धम्मो ॥ ११ ॥ (१३२)

'जड्डाणं व०' जड्डानां—द्रव्यभावमूर्खाणां वड्डानां—केषांचित् मठपारापतसदृशानां वृद्धानां निर्विज्ञानानां—विशिष्टज्ञानरहितानां निर्विशेषाणां—अपवादोत्सर्गज्येष्ठेतरादिविशेषरहितानां संसारशूकराणां एवंविधानां गृहस्थानां साध्वाभासानामपि कथितमपि—उक्तं वक्ष्यमाणं निरर्थकं भवति, ब्रह्मदत्तोदाईनृपमारकादिवत् ॥ ९ ॥ 'किं पुत्ते०' पुत्रैः—अङ्गजैः किं ?, न किञ्चित्, पितृभिर्वा किं ?, अर्थेनापि पिण्डितेन मीलितेन बहुकेन—प्रभूतेन किं ?, नन्दमम्मणादीनामिव योऽङ्गजादिकलापः मरणदेशकाले—मरणप्रस्तावे न भवत्यालम्बनं—आधाररूपं किञ्चिदिति ॥ १० ॥ 'पुत्ता च०' मातापितरौ पुत्रास्त्यजन्ति 'मित्त' मित्राणि त्यजन्ति, सहजमित्रपर्वमित्रवत्, भार्याऽपीमं—प्रत्यक्षं जीवन्तमित्यर्थः मृतं वा स्वकान्तं त्यजति, यद्वा भार्याऽपि णमिति वाक्यालङ्कारे आर्षत्वादकारविश्लेषेऽमयमिति अमृतं—जीवन्तं त्यजति जीवन्तमेव स्वकान्तं मुक्त्वाऽन्यत्—पुरुषान्तरं भर्तृत्वेन प्रतिपद्यते वनमालावत्, यस्मिन् प्रस्तावे ते पुत्रादयस्त्यजन्ति 'त'मिति तस्मिन् प्रस्तावे मरणदेशकाले च न त्यजति 'सु'इति जिनाज्ञापूर्वकदृढभावेन 'वी'ति विशेषेण निरन्तरकरणेनार्जितो धर्मः—श्रुतचारित्ररूप इति ॥ १२ ॥ अथ गाथाचतुष्टयेन धर्ममाहात्म्यं वर्णयन्नाह—

धम्मो त्ताणं धम्मो सरणं धम्मो गई पइट्ठा य । धम्मेण सुचरिएण य गम्मइ अजरामरं ठाणं ॥ १२ ॥ (१३३) पीइकरो वन्नकरो भासकरो जसकरो य अभयकरो । निव्वुइकरो य सययं पारित्तबिइज्जओ धम्मो ॥ १३ ॥ (१३४) अमरवरेसु अणोवमरूवं भोगोवभोगरिद्धी य । विन्नाणनाणमेव य लब्भइ सुकएण धम्मेण ॥ १४ ॥ (१३५) देविंदचक्कवट्टित्तणाइ रज्जाइं इच्छिया भोगा । एयाइं धम्मलाभा फलाइं जं चावि निव्वाणं ॥ १५ ॥ (१३६)

'धम्मो त्ता०' धर्मः—सम्यग्ज्ञानदर्शनचरणात्मकः त्राणं—अनर्थप्रतिहन्ता अर्थसम्पादकश्च तद्धेतुत्वात् धर्मः शरणं—रागाद्यरिभयभीरुकजनपरिरक्षणं, धर्मो गम्यते—दुःस्थितैः सुस्थितार्थमाश्रीयते इति गतिः, धर्मः प्रतिष्ठा—संसारगर्त्तापतत्प्राणिवर्गस्याधारः, धर्मेण सुचरितेन—सुष्ठु सेवितेन चशब्दादनुमोदनेन साहाय्यदानादिना गम्यते—अवश्यं प्राप्यते अजरामरं स्थानं—मोक्षलक्षणमित्यर्थः देवकुमारवत् ॥ ११ ॥ 'पीइकरो०' प्रीतिकरः—परमप्रीत्युत्पादकः वर्णकरः—एकदिग्व्यापिकीर्त्तिकरः यद्वा वपुषि गौरत्वादिवर्णकरः यद्वा शुद्धाक्षरात्मकज्ञानकरः भाकरः—कान्तिकरः यद्वा भाषाकरः—वचनपटुत्वमाधुर्यादिगुणकर इत्यर्थः, यशःकरः—सर्वदिग्व्यापिकीर्त्तिकरः, चशब्दाच्छ्लाघाशब्दकरः, तत्र श्लाघा—तत्स्थान एव साधुवादः शब्दः—अर्धदिग्व्यापीति, अभयकरो—निर्भयकरः निर्वृत्तिकरः—सर्वकर्मक्षयकरः 'पारित्तबि-

इज्ज०'त्ति परत्रद्वितीयः, जीवानां परलोके द्वितीय इत्यर्थः ॥ १३ ॥ 'अमरवर०' अमरवरेषु—महामहर्धिकदेवेषु—अनुपमरूपं भोगोपभोगऋद्धयश्च विज्ञानं ज्ञानमेव च लभ्यते सुकृतेन धर्मेण प्रदेशिराजमेघकुमारधन्यानगारानन्दादीनामिव, तत्र भोगाः—गन्धरसस्पर्शाः, यद्वा सकृद् भोज्या अन्नादयः उपभोगाः—शब्दरूपविषयाः यद्वा सकृद् भोगाः पुनः पुनः उपभोगाः ते च वस्त्रपात्रादयः ऋद्धयो—देवदेव्यादिपरिवारभूताः, विज्ञानं—अनेकप्रकाररूपादिकरणं, ज्ञानं—मतिश्रुतावधिरूपं, यद्वा देवेषु रूपादयः प्राप्यन्ते, इह च 'विन्नाण'त्ति केवलज्ञानं 'नाणं'ति ज्ञानचतुष्कं त्रिकं द्विकं चेति ॥ १५ ॥ 'देविंद०' देवेन्द्रचक्रवर्त्तित्वानि राज्यानि गजाश्वरथपदातिभाण्डागारकोष्ठागारवप्रलक्षणानि, यद्वा स्वाम्य १ मात्य २ जनपद ३ दुर्ग ४ बल ५ शस्त्र ६ मित्राणीति ७, इप्सिता भोगाः, एतानि धर्मलाभात् फलानि भवन्ति, यच्चापि निर्वाणमिति ॥ १५ ॥ अथात्रोक्तं निरुपयति—

आहारो १ उच्छासो २ संधि ३ सिराओ य ४ रोमकूवाइं ५। पित्तं ६ रुहिरं ७ सुक्कं ८ गणियं गणियप्पहाणेहिं ॥ १६ ॥ (१३७) एयं सोउं सरीरस्स वासाणं गणियप्पागडमहत्थं । मुक्खपउमस्स ईहह सम्मत्तसहस्सपत्तस्स ॥ १७ ॥ (१३८) एयं सगडसरीरं जाइजरामरणवेयणाबहुलं । तह घत्तह काउं जे जह मुचह सव्वदुक्खाणं ॥ १८ ॥ (१३९)

इति 'तन्दुलवेयालियं' समासम् ।



'आहारो०' अत्र—प्रकीर्णके जीवानां गर्भे आहारस्वरूपं १ गर्भे उच्छ्वासपरिमाणं २ शरीरे सन्धिस्वरूपं ३ शरीरे शिराप्रमाणं ४ वपुषि रोमकूपानि ५ पित्तं ६ रुधिरं ७ शुक्रं ८ चशब्दान्मुहूर्त्तादिकमेतत्पूर्वोक्तं गणितं—सङ्ख्या प्रमाणतो निरूपितं, कैः ?—गणितप्रधानैः—तीर्थकरगणधरादिभिः ॥ १६ ॥ 'एयं सोउं०' एतत्पूर्वोक्तं श्रुत्वा—आकर्ण्य शरीरस्य तथा वर्षाणां गणितं प्रकटं श्रुत्वा, किंभूतं ?—महान् अर्थो—ज्ञानवैराग्यादिको यस्मात् स महार्थस्तत् यूयं मोक्षपद्ममीहत—वाञ्छत, किंभूतं ?—'सम्मत्त'त्ति अनन्तज्ञानपर्यायानन्तदर्शनपर्यायानन्तागुरुलघुपर्यायादिसहस्रपत्राणि यत्र तत्सम्यक्त्वसहस्रपत्रं, अत्र कर्मणि षष्ठी ॥ १७ ॥ 'एयं स०' एतच्छरीरशकटं जातिजरामरणवेदनाबहुलं 'तह घत्तह'त्ति तथा यतध्वं—तथा यत्नं कुरुवेत्यर्थः, यद्वा तथा खेटयत 'काउं' कृत्वा—विधाय तपःसंयमादिकमिति शेषः, 'जे'इति पादपूरणे, यथा मुञ्चत, केभ्यः?—सर्वदुःखेभ्यः, बलसारराजर्षिवदिति ॥ १८ ॥

इति श्रीहीरविजयसूरिसेवितचरणेन्दीवरे श्रीविजयदानसूरीश्वरे विजयमाने वैराग्यशिरोमणीनां मुक्तशिथिलाचाराणां घनभावघनभव्यशिलीमुखसेवितक्रमणबिसप्रसूनानां श्रीआनन्दविमलसूरीश्वराणां शिष्याणुशिष्येण विजयविमलाख्येन पण्डितश्रीगुणसौभाग्यगणिप्राप्ततन्दुलवैचारिकज्ञानांशेन श्रीतन्दुलवैचारिकस्येयमवचूरिः समर्थिता । अत्र मया मूर्खशिरोमणिना जिनाज्ञाविरुद्धं यद् व्याख्यातं लिखितं च तन्मयि रङ्के परमदयां कृत्वाऽऽगमज्ञैः संशोध्यमिति भद्रम् ।

इति तन्दुलवेयालियं विवृत्तितः समाप्तम् ।

॥ अर्हं नमः ॥

# अथ सावचूर्णिकं श्रीमहावीरहस्तदीक्षितवीरभद्रमुनिवर्यप्रणीतं चतुःशरणप्रकीर्णकम् ।

इदमध्ययनं परमपदप्राप्तिवीजभूतत्वात् श्रेयोभूतं अतस्तदारम्भे ग्रन्थकृत् मङ्गलरूपसामायिकाद्यावश्यकार्थकथनभाव-मङ्गलकारणद्रव्यमङ्गलभूतगजादि १४ स्वप्नोच्चारव्याजसर्वतीर्थकृद्गुणस्मरणवर्तमानतीर्थाधिपतिश्रीवीरनमस्करणरूपं मङ्गल-त्रयमाह–'सावज्जे'ति, अथवा षडावश्यकयुतस्यैव प्रायश्चतुःशरणप्रतिपत्त्यादियोग्यता स्यादतः प्रथमं षडावश्यकमाह–

सावज्जजोगविरई १ उक्कित्तण २ गुणवओ अ पडिवत्ती ३ ।
खलिअस्स निंदणा ४ वणतिगिच्छ ५ गुणधारणा ६ चेव ॥ १ ॥

'सावज्जे'त्यादि, सहावद्येन–पापेन वर्तन्ते इति सावद्याः योगा–मनोवाक्कायरूपा व्यापारास्तेषां विरतिः–निवृत्तिः सावद्ययोगविरतिः सा सामायिकेन क्रियते इत्यध्याहारः १, उत्कीर्त्तनं–जिनगुणानामुत्कीर्त्तना, सा चतुर्विंशतिस्तवेन क्रियते २, गुणा–ज्ञानदर्शनचारित्राद्याः ते विद्यन्ते येषां ते गुणवन्तो–गुरवस्तेषां प्रतिपत्तिः–भक्तिर्गुणवत्प्रतिपत्तिः सा



वन्दनेन क्रियते ३, स्खलनं स्खलितं–आत्मनोऽतिचारापादनं तस्य निन्दनं–निन्दना न पुनः करिष्ये इत्यभ्युपगमनं सा प्रतिक्रमणेन क्रियते ४, व्रणस्य–अतिचाररूपभावव्रणस्य चिकित्सा–प्रतीकाररूपा सा कायोत्सर्गेण क्रियते ५, गुणा–विरत्यादयो मूलगुणोत्तरगुणरूपास्तेषां धारणं धारणा सा प्रत्याख्यानेन क्रियते ६, 'चैवे'ति षण्णामपि समुच्चये ॥ १ ॥ अथ किञ्चिद्विशेषत एतेषां सामायिकादीनां षण्णामपि स्वरूपं चारित्रविशुद्ध्यादिरूपं फलं चाह—

चारित्तस्स विसोही कीरइ सामाइएण किल इहयं ।
सावज्जेअरजोगाण वज्जणाऽऽसेवणत्तणओ ॥ २ ॥

'चारित्ते'त्यादि, चारित्रस्य–चारित्राचारस्य पञ्चसमितित्रिगुप्तिरूपस्य विशोधनं विशोधिः–निर्मलता क्रियते, केन ?–सामायिकेन–समभावलक्षणेन 'किले'ति सत्ये' 'इहयं'ति इहैव जिनशासने नान्यत्र शाक्यादिदर्शने, तेषु सामा-यिकपरिभाषाया अप्यभावात्, कथं सामायिकेन विशोधिः क्रियते? इत्याह–'सावज्जे'त्ति सावद्याः–सपापा इतरे च–निरवद्या ये योगाः–कायादिव्यापारास्तेषां यथासङ्ख्यं ये वर्जनासेवने ताभ्यां वर्जनासेवनातः सावद्यानां वर्जनतः इतराणां त्वासेवनतश्च तेन विशोधिः क्रियते इति तात्पर्यार्थः ॥ २ ॥ उक्ता चारित्राचारविशुद्धिः, अथ दर्शनाचारविशुद्धिमाह—

दंसणयारविसोही चउवीसायत्थएण किज्जइ अ ।
अच्चब्भुअगुणकित्तणरूवेण जिणवरिंदाणं ॥ ३ ॥

'दंसणे'त्यादि, दर्शनं–सम्यक्त्वं तस्याचारो–निश्शङ्कितेत्याद्यष्टविधः तस्य विशोधिः–निर्मलता चतुर्विंशतेरात्मनां–

जीवानां तीर्थङ्करसम्बन्धिनां स्तवः क्रियते यत्र स चतुर्विंशत्यात्मस्तवो–लोगस्सेत्यादिरूपस्तेन क्रियते, 'चउवीसाइत्थएणे'ति पाठे जिनानां चतुर्विंशत्याः स्तवेनेत्यर्थः, चकारो द्वितीयावश्यकसमुच्चयार्थः, चतुर्विंशतिस्तवेन क्रियते, किंभूतेनेत्याह– 'अच्चब्भुअ'इत्यादि, अत्यद्भुताः–सर्वातिशायिनो लोकोद्योतकरादयो ये गुणास्तेषां यदुत्कीर्त्तनं–वर्णनं तद्रूपेण, केषां तदित्याह–'जिवणरिंदाणं'ति जिना–रागादिजयादुपशान्तमोहादयस्तेषां मध्ये वराः–केवलिनस्तेषां इन्द्रा इव इन्द्रास्तीर्थङ्करा जिनवरेन्द्रास्तेषामित्यर्थः ॥ ३ ॥ उक्ता दर्शनाचारविशुद्धिः, इदानीं ज्ञानाचारस्य चारित्राचारदर्शनाचारयोश्च विशेषेण विशुद्धिमाह—

नाणाईआ उ गुणा तस्संपन्नपडिवत्तिकरणाओ ।
वन्दणएणं विहिणा कीरइ सोही उ तेसिं तु ॥ ४ ॥

'नाणाईआ' इति 'नाण'त्ति ज्ञानाचारः–कालविनयाद्यष्टविधः आदिशब्दाद्दर्शनचारित्राचारग्रहो, ज्ञानदर्शनचारित्रयुक्त एव वन्दनकार्हो नान्यो ज्ञानवानपि पार्श्वस्थादिर्व्यवहारतः चारित्रवानपि निह्नवादिरिति ज्ञापनार्थः, ज्ञानमादौ येषां ते ज्ञानादिकाः, 'तुः' अवधारणे, एतेन ज्ञानादिका एव गुणा इत्यर्थः, तैर्ज्ञानादिगुणैस्सम्पन्ना–युक्तास्तत्सम्पन्ना गुरवस्तेषां प्रतिपत्तिः–भक्तिस्तस्याः करणं तस्मात् तत्सम्पन्नप्रतिपत्तिकरणाद्विनयकरणादित्यर्थः, केन?–वन्दनकेन, कथं?–विधिना–द्वात्रिंशद्दोषरहिततया पञ्चविंशत्यावश्यकविशुद्धतया च, 'तेसिं तु'त्ति तेषां–ज्ञानाचारादीनां



तुः पुनरर्थे चारित्राचारदर्शनाचारयोः प्राक्शोधितयोरपि पुनर्विशेषेण शोधिः क्रियते इत्यर्थः ॥ ४ ॥ उक्ता वन्दनकेन ज्ञानाद्याचारत्रयशुद्धिः, सम्प्रति प्रतिक्रमणकायोत्सर्गाभ्यां गाथाद्वयेन तामाह—

खलियस्स य तेसिं पुणो विहिणा जं निंदणाइ पडिकमणं ।
तेणं पडिकमणेणं तेसिंपि य कीरए सोही ॥ ५ ॥
चरणाइयाइयाणं जहक्कमं वणतिगिच्छरूवेणं ।
पडिकमणासुद्धाणं सोही तह काउसग्गेणं ॥ ६ ॥

स्खलितस्य–व्रतविषयस्यातिक्रमव्यतिक्रमादिप्रकारसंजातापराधस्य तथा 'तेसिं'न्ति तेषां–ज्ञानाचारादीनां पुनः प्रतिषिद्धकरणकृत्याकरणाश्रद्धानविपरीतप्ररूपणादिप्रकारसंजातातिचारस्य च विधिना–सूत्रोक्तप्रकारेण 'जं निंदणाइ'इति यन्निन्दनं निन्दना–दुष्टं मयैतत् कृतमिति, आदिशब्दाद्गर्हादिग्रहः, गुरुसाक्षिकमात्मदोषाविष्करणं गर्हा, एवंप्रकारस्खलितस्य यन्निन्दनादिकरणं–तस्माद्दोषजातान्निवर्त्तनं तत्प्रतिक्रमणमुच्यते इति शेषः, प्रतीपं क्रमणं प्रतिक्रमणं इति व्युत्पत्तिः, अतः कारणात्तेन प्रतिक्रमणेन 'तेसिं पिय'त्ति न केवलं सामान्यतो व्रतादिविषयापराधानां, किन्तु तेषामपि ज्ञानाचारादीनां क्रियते विशोधिः–निर्मलतेति, 'चरणाइय'त्ति चरणं–चारित्रं अतिगच्छन्ति–अतिक्रामन्तीति चरणातिगाः, अतिचारा इति हृदयं, ते आदौ येषां ते चरणातिगादिकाः–सर्वेऽप्यतिचारास्तेषां चरणातिगादिकानां, कथंभूतानां?–प्रतिक्रमणेन–प्रागुक्तेनाशुद्धानामर्द्धशुद्धानां वा शुद्धिस्तथैव–प्रागुक्तप्रकारेण क्रियते, केन?–कायोत्सर्गेण, किं-

भूतेन ?-'जहक्कमं वणतिगिच्छ'त्ति यथाक्रमं-क्रमप्राप्तेन 'आलोअणपडिकमणे' इतिगाथोक्तदशविधप्रायश्चित्तमध्ये पञ्चमप्रायश्चित्तेन 'वण'त्ति द्रव्यभावभेदेन द्विधा व्रणं, तत्र द्रव्यव्रणः-कण्टकभङ्गादिजनितो भावव्रणस्तु अतिचार-शल्यरूपस्तस्य भावव्रणस्य चिकित्सा-प्रतीकारः सैव रूपं यस्य कायोत्सर्गस्य स व्रणचिकित्सारूपस्तेन, कायोत्सर्गेणाति-चाराः शोध्यन्ते इति भावो, महन्निर्जराकारणत्वात् तस्य, प्राक् 'नाणाइआ'इत्यत्र ज्ञाननयप्राधान्याश्रयणात् ज्ञानादय इत्युक्तं, 'चरणाइआ' इत्यत्र तु क्रियानयप्राधान्याश्रयाणाच्च विवक्षया चरणादय इति ॥ ५ ॥ ६ ॥ एवं गाथापञ्चके-ना[ति]चारत्रयस्य शुद्धिरुक्ता, अथ तपोवीर्याचारयोस्तामाह-

गुणधारणरूवेणं पच्चक्खाणेण तवऽइयारस्स । विरियायारस्स पुणो सव्वेहिवि कीरए सोही ॥ ७ ॥

'गुणधारणे'त्यादि, गुणा-विरत्यादय उत्तरोत्तरा यथा विरतेराश्रवद्वारस्थगनं तत्स्थगनात् तृष्णाव्यवच्छेदस्तस्माद-तुलोपशमस्तस्मात्प्रत्याख्यानशुद्धिस्तच्छुद्धेश्चारित्रनैर्मल्यं तस्मात्कर्मविवेकस्तस्मादपूर्वकरणमपूर्वकरणात्केवलज्ञानं ततश्च मोक्षो भवतीति, तेषां गुणानां धारणं तदेव रूपं यस्य तेन प्रत्याख्यानेन-'अणागयमइक्कंतं' इत्यादिदशविधेन अथवा पञ्चमहाव्रतद्वादशश्राद्धव्रतनमस्कारसहितादिदशप्रत्याख्यानरूपसप्तविंशतिविधेन वा तपआचारातिचारस्य-'बारस-विहंमिवि तवे' इति गाथोक्तस्य शुद्धिः क्रियते इति संटंकः, 'विरियायारस्स'त्ति विशेषेण ईरयति-प्रेरयति आत्मानं तासु तासु क्रियास्विति वीर्यं-तपोवीर्यं-गुणवीर्यं-चारित्रवीर्यं-समाधिवीर्यं-आत्मवीर्यभेदभिन्नं पञ्चविधं तस्या-चारो वीर्याचारः 'अणिगूहिअबलविरिए' इत्यादिकस्तस्य सर्वैरपि पूर्वोक्तैः षड्भिरप्यावश्यकैः शुद्धिः क्रियते, अन्यूनाधिका-



वश्यककरणप्रयत्नेन वीर्याचारशुद्धिर्भवत्येव, महाकर्मनिर्जराहेतुत्वात् ॥ ७ ॥ उक्ता आचारपञ्चकशुद्धिः, अथ सर्वजिनगुणो-त्कीर्तनगर्भं मङ्गलभूतं गजादिस्वप्नसंदर्भमाह-

गय १ वसह २ सीह ३ अभिसेय ४ दाम ५ ससि ६ दिणयरं ७ झयं ८ कुम्भं ९ ।
पउमसर १० सागर ११ विमाण-भवण १२ रयणुच्चय १३ सिहिं १४ च ॥ ८ ॥

गाथा सुगमा, नवरं 'अभिसेअ'त्ति चतुर्थस्वप्ने पार्श्वद्वयवर्तिकरिकलभशुण्डादण्डविधृतकलशयुगलाभिषिच्यमानां लक्ष्मीं जिनमाता पश्यति, 'विमाणभवण'त्ति द्वादशस्वप्ने देवलोकागततीर्थकृज्जननी विमानं पश्यति नरकागतजिन-जननी तु भवनं, विमानभवनयोराकारमात्रकृत एव विशेषः, गजदर्शनात्स्वाम्यपि तद्वदतुलपराक्रमनिधिर्भावी, वृषभद-र्शनात् महामोहपङ्कमग्नधर्मरथधुरोद्धरणक्षमो भरते धर्मबीजवापननिमित्तं च भावीति स्वप्नैरपि जिनगुणाः सूच्यन्ते, चतु-र्दशस्वप्नसंख्यया तु चतुर्दशरज्ज्वात्मकस्यापि लोकस्योपरिवर्त्ती पुत्रो भविष्यतीति निवेद्यते इति सर्वतीर्थकृद्गुणवर्णनरूपं स्वप्नमङ्गलमुक्तम् । अथ श्रीवीरनमस्काररूपं तृतीयं मङ्गलं प्रस्तुताध्ययनप्रस्तावनां चाह-

अमरिंदनरिंदमुणिंदवंदिअं वंदिउं महावीरं ।
कुसलाणुबंधिबन्धुरमज्झयणं कित्तइस्सामि ॥ ९ ॥

'अमरिंदनरिंद'त्ति उपक्रमकृतेनापमृत्युना न म्रियन्ते इत्यमरास्तेषां इन्द्रा अमरेन्द्राः नराणामिन्द्रा नरेन्द्रा मुनीना-मिन्द्रा मुनीन्द्राः द्वन्द्वः तैर्वन्दितं 'वन्दिउं'ति वन्दित्वा, कं ?-'महावीरं' महद्वीर्यं यस्यानन्तबलत्वादेवकृतपरीक्षा-

यामपि मनागप्यक्षुभितत्वाच्च महावीरस्तं 'कुसलाणुबंधि'त्ति कुशलो–मोक्षस्तं अनुबन्धीति–परम्परया ददातीत्येवंशीलं कुशलानुबन्धि, तथा बन्धुरं–मनोज्ञं, जीवानां ऐहिकामुष्मिकसमाधिहेतुत्वात्, किं ?–अधीयते–ज्ञायते परिच्छिद्यतेऽर्थसमुदायोऽस्मादित्यध्ययनं–शास्त्रं, कीर्त्तयिष्यामि–कथयिष्यामीति सम्बन्धः ॥ ४ ॥ अथ प्रस्तुताध्ययनार्थाधिकारानाह–

चउसरणगमण १ दुक्कडगरिहा २ सुकडाणुमोअणा ३ चेव ।
एस गणो अणवरयं कायव्वो कुसलहेउत्ति ॥ १० ॥

'चउसरण'त्ति चतुर्णामर्हत्सिद्धसाधुधर्माणां शरणगमनं प्रथमोऽधिकारः, दुष्टं कृतं दुष्कृतं तस्य गर्हा–गुरुसाक्षिकमात्मदोषकथनं द्वितीयोऽधिकारः, शोभनं कृतं सुकृतं तस्यानुमोदना–भव्यं मयैतत्कृतमिति तृतीयोऽधिकारः, 'चैवे'ति समुच्चये, एषः–अयं गणः–त्रयाणां समुदायोऽनवरतं–सततं कर्त्तव्यः–अनुसरणीयः कुशलो–मोक्षस्तस्य कारणमयमितिकृत्वा ॥ १० ॥ अथ चतुःशरणरूपं प्रथमाधिकारमाह–

अरिहंत १ सिद्ध २ साहू ३ केवलिकहिओ सुहावहो धम्मो ४ ।
एए चउरो चउगइहरणा सरणं लहइ धन्नो ॥ ११ ॥

'अरहंते'त्यादि, देवेन्द्रकृतां पूजामर्हन्तीत्यर्हन्तः १ तथा सिध्यन्ति–निष्ठितार्था भवन्तीति सिद्धाः २ तथा निर्वाणसाधकान् योगान् धर्मव्यापारान् साधयन्ति–कुर्वन्तीति साधवः ३ तथा दुर्गतौ पतन्तं प्राणिनं धरतीति धर्मः, किंभूतः ?–केवलिभिः–ज्ञानिभिः कथितः–प्रतिपादितः केवलिकथित इति, अनेन स्वमतिकल्पितान्यतीर्थिकधर्मनिरास-



माह, पुनः कथम्भूतो धर्मः ?–सुखमावहति–परम्परया चटत्प्रकर्षं प्रापयतीति सुखावहः, अनेन इहलोकेऽपि मिथ्यादृष्टिधर्मस्य भैरवपतनशिरःक्रकचदापनादिदुःखाकीर्णत्वात् परलोके भवभ्रमणकारणत्वात्तन्निषेधमाह, एतेऽर्हत्सिद्धसाधुधर्माश्चत्वारश्चतसृणां गतीनां समाहारश्चतुर्गतिः– नरकतिर्यग्नरामरलक्षणं हरन्ति सिद्धिलक्षणपञ्चमगतिप्रापणेनेति चतुर्गतिहरणाः, यस्मादिति गम्यं, अत एव भवाटव्यामटन् शरणरहितः कश्चिद्धन्यः–सुकृतकर्मा एव शरणं लभते, शरणत्वेन प्रतिपद्यते इत्यर्थः ॥ ११ ॥ अथ यथा विधिना एतान् शरणं प्रपद्यते तथाऽऽह—

अह सो जिणभत्तिभरुत्थरंतरोमंचकंचुअकरालो ।
पहरिसपणउम्मीसं सीसंमि कयंजली भणइ ॥ १२ ॥

'अह सो'त्ति, अथ सः–शरणप्रतिपत्ता चतुर्विधसङ्घस्यान्यतमो जीवः, कथंभूतो ?–जिनेषु भक्तिस्तस्या भरः–प्राबल्यं तस्माज्जिनभक्तिभरात् 'उत्थरंत'त्ति अवस्तृणन्–उदयं गच्छन् योऽसौ रोमाञ्चः स एव शरीरावारकत्वात्कञ्चुको रोमाञ्चकंचुकस्तेन करालः–अन्तरङ्गशत्रूणां भीषणः, तथा प्रकृष्टो हर्षः प्रहर्षः तस्माद्यत्प्रणतं–प्रणामस्तेन उन्मिश्रं-व्याकुलं यथा भवति एवं, यद्वा प्रहर्षवशाद्योऽसौ प्रणयः–आनन्दाश्रुगद्गदस्वरस्तेनोन्मिश्रं, क्रियाविशेषणमेतत्, तथा शिरसि–मस्तके कृताञ्जलिः–कृतकरकुड्मलः सन् भणति ॥ १२ ॥ अर्हच्छरणमङ्गीकुर्वन् यदसौ भणति तद्गाथादशकेनाह—

रागदोसारीणं हंता कम्मट्ठगाइ अरिहंता ।
विसयकसायारीणं अरिहंता हुंतु मे सरणं ॥ १३ ॥

रायसिरिमवकसित्ता तवचरणं दुचरं अणुचरंता ।
केवलसिरिमरिहंता अरहंता हुंतु मे सरणं ॥ १४ ॥
थुइवंदणमरिहंता अमरिंदनरिंदपूअमरहंता ।
सासयसुहमरहंता अरहंता हुंतु मे सरणं ॥ १५ ॥
परमणगयं मुणंता जोइंदमहिंदझाणमरिहंता ।
धम्मकहं अरहंता अरहंता हुंतु मे सरणं ॥ १६ ॥
सवजिआणमहिंसं अरहंता सच्चवयणमरहंता ।
बंभव्वयमरहंता अरहंता हुंतु मे सरणं ॥ १७ ॥
ओसरणमवसरंता चउतीसं अइसए निसेवित्ता ।
धम्मकहं च कहंता अरहंता हुंतु मे सरणं ॥ १८ ॥
एगाइ गिराऽणेगे संदेहे देहिणं समं छित्ता ।
तिहुअणमणुसासंता अरिहंता हुंतु मे सरणं ॥ १९ ॥
वयणामएण भवणं निव्वावंता गुणेसु ठावंता ।
जिअलोअमुद्धरंता अरिहंता हुंतु मे सरणं ॥ २० ॥

॥ ६१ ॥

अच्चब्भुअगुणवंते निअजससससहरपसाहियदिअंते ।
निअयमणाइमणन्ते पडिवन्नो सरणमरिहंते ॥ २१ ॥
उज्झिअजरमरणाणं समत्तदुक्खत्तसत्तसरणाणं ।
तिहुअणजणसुहयाणं अरिहंताणं नमो ताणं ॥ २२ ॥

'रागद्दोसा०' इति, रागस्त्रिधा दृष्टिरागकामरागस्नेहरागभेदात्, द्वेषः–परद्रोहाध्यवसायः, अथवाऽभिष्वङ्गमात्रं रागः अप्रीतिमात्रं द्वेषः, एतयोरुपलक्षणत्वात् मदमत्सराहंकाराणां ग्रहः त एवारयो रागद्वेषारयस्तेषां हंतारो रागद्वेषारिहंतारः, तथा कर्मणां–ज्ञानावरणादीनां अष्टकं कर्माष्टकं तदादौ येषां ते कर्माष्टकादयस्ते च ते अरयश्च कर्माष्टकाद्यरयः, आदिशब्दात्परीषहवेदनोपसर्गादिग्रहः, तेषां हन्तारः, षष्ठीलोपोऽत्र द्रष्टव्यः, तथा विषयाः–शब्दरूपगन्धरसस्पर्शाः कषायाः–क्रोधमानमायालोभाः अनन्तानुबन्ध्यादिभेदास्त एव जीवानामनर्थकारित्वात् अरयस्तेषां हन्तारः, पाश्चात्यं हन्ता इति पदमत्रापि सम्बध्यते, अथवा विषयकषायाणां विनाशकत्वेनारयस्तीर्थङ्करा विषयकषायारयः, णमिति वाक्यालङ्कारे, एवंविधा अर्हन्तो–जिना मे–मम शरणं–परित्राणं भवन्त्वित्यर्थः ॥ १३ ॥ 'रायसिरि०'त्ति, राज्यश्रियं–राज्यलक्ष्मीं अपकृष्य–अवधूय त्यक्त्वेत्यर्थः, तथा तप्यते कर्ममलापनयनेनात्मा सुवर्णमिवाग्निनाऽनेनेति तपस्तस्य चरणं–आसेवनं, कथंभूतं ?–दुश्चरं–सामान्यसाधुभिः कर्तुमशक्यं वार्षिकषण्मासादिरूपं अप्रमत्ततामौनकायोत्सर्गादिक्रियाविशेषितमजलं च तत्तपोऽनुचर्य–आसेव्य ये केवलश्रियं-केवलज्ञानविभूतिमर्हन्तः तस्या योग्या भवन्तीत्यर्थः तेऽर्हन्तः–तीर्थकृतो

मे शरणं भवन्त्विवति सर्वत्र योज्यं, अथवा प्रथमांतान्येव पदानि योज्यानि, राज्यश्रियमपकर्षयन्तः—त्यजन्तस्तथा तपश्चरणं दुश्चरमनुचरन्तः केवलश्रियं चार्हन्तः—प्राप्नुवन्तो ये ते शरणं, एतेन पूर्वोक्तेन राज्यश्रीत्यागतपश्चरणकरणकेवलश्रीप्रापणरूपावस्थात्रयशरणगमनप्रतिपादनेन यद्यपि शक्रादीनां सर्वास्वप्यवस्थासु जिना नमस्कारार्हास्तथापि ते गृहवासस्थाः साधूनां न नमस्कारार्हाः अविरतत्वादिति दर्शितं, यच्चानागतजिनाः साधुभिर्नमस्क्रियन्ते तेऽपि भाविभावचारित्रावस्था एवेति भावः ॥ १४ ॥ 'थुइवंद०'त्ति, स्तवः 'थुइ' पाठे स्तुतिर्वा—सद्भूतगुणोत्कीर्त्तनं वन्दनं—कायिकः प्रणामः तौ अर्हन्तः—तयोर्योग्या जगतोऽपीति शेषः, अमरेन्द्रनरेन्द्राणां पूजां—समवसरणादिकां समृद्धिं अर्हन्तः—तस्या अपि योग्या भवन्तः, तथा शश्वत् भवं शाश्वतं तच्च तत्सुखं च शाश्वतसुखं-निर्वाणादनन्तरं तदप्यर्हन्ति-तस्या अपि योग्या भवन्तीत्यर्हन्तः, शेषं पूर्ववत् ॥ १५ ॥ 'परमण०'त्ति, परेषां-आत्मव्यतिरिक्तानां मनांसि परमनांसि तेषु गतं स्थितं चिन्तितं इत्यर्थः तत् मुणन्तो-जानन्तः 'मुणत् प्रतिज्ञाने' इति धातुः 'ज्ञो जाणमुणा (श्री०सि०अ०८पा०३सू.७)' 'वित्यादेशो वा, एतेन अनुत्तरसुराणां मनःसंशयपरिज्ञानतदुच्छेदसमर्था जिना इत्युक्तं, तथा योगिनो-मुनयस्तेषामिन्द्राः-गौतमादयः महान्तश्च ते इन्द्राश्च महेन्द्राः-शक्रादयस्तेषां ध्यानं-स्थिराध्यवसायरूपं तदर्हन्तीति योगीन्द्रमहेन्द्रध्यानार्हाः, तथा धर्मकथां-दानशीलतपोभावनादिकां कथयितुमर्हन्तः—तस्याः कथनयोग्याः सर्वज्ञत्वेन सर्वभाषानुयायियोजनगामिवागतिशयत्वेन, छद्मस्थावस्थायां तु मौनावलम्बित्वेन धर्मकथानर्हत्वाज्जिनानां, शेषं प्राग्वत् ॥ १६ ॥ 'सव्व०' त्ति सर्वे सूक्ष्मबादरत्रसस्थावरा ये जीवास्तेषां न हिंसा अहिंसा—रक्षा तामर्हन्तः तथा सतां हितं सत्यं—तथ्यं तच्च तद्वदनं च तदेवार्हन्तोऽसत्य-



भाषणहेतुरागद्वेषमोहरहितत्वात्तेषां, तथा ब्रह्मव्रतं अष्टादशभेदं 'दिव्यौदारिककामानां' (कृतानुमतिकारितैः । मनोवाक्कायतस्त्यागो, ब्रह्माष्टदशधा मतम् ॥ १ ॥) इति श्लोकोक्तमासेवितुं प्ररूपयितुमनुमोदयितुं चार्हन्तः, शेषं तथैव ॥ १७ ॥ तथा 'ओस'त्ति अवस्रियते—गम्यते संसारभयोद्विग्नैः जीवैरित्यवसरणं समवसरणमित्यर्थः तदवसृत्य—अलंकृत्य, तथा चतुस्त्रिंशतो—जन्मजकर्मक्षयजसुरकृतान् यथाक्रमं चतुरेकादशैकोनविंशतिसङ्ख्याप्रसिद्धानतिशयान्निषेव्य, उपलक्षणत्वात्पञ्चत्रिंशद्वचनातिशयांश्च, तथा धर्मकथां कथयित्वा ये मुक्तिं यान्ति यास्यन्ति याता इत्यध्याहार्यं 'कहंता' इति पाठे धर्मकथां कथयन्तो ये वर्त्तन्ते ते शरणं, पूर्वं धर्मकथाकथनयोग्या इत्युक्तं अत्र तु धर्मकथां कथयन्त एवेति न पौनरुक्त्यं, अत्र चाध्ययनेऽन्यत्रापि यत्र कुत्रचित् पौनरुक्त्यसम्भवः तत्र स्तुत्युपदेशरूपत्वेन न दोष इति ज्ञेयं, यदुक्तं—'सज्झायज्झाणतवोसहेसु उवएसथुइपयाणेसु । संतगुणकित्तणेसु अ न हुंति पुणरुत्तदोसा उ ॥१॥ [स्वाध्यायध्यानतपऔषधेषु उपदेशस्तुतिप्रदानेषु । सतां गुणकीर्त्तनेषु च न भवन्ति पुनरुक्तदोषास्तु ॥ १ ॥] शेषं तथैव ॥ १८ ॥ 'एगाइ गिर' त्ति एकयाऽपि गिरा—एकेनापि वचनेन अनेकप्रकारान् संदेहान्—संशयान्, केषां ?—देहिनां—सुरासुरनरतिर्यग्रूपाणां समं—समकालमेव छित्त्वा संशयत्रुटिं कृत्वेत्यर्थः 'समुच्छित्ते'ति पाठे समुच्छिद्येति ज्ञेयं, त्रिभुवनमनुशास्य—शिक्षयित्वा अनुशासयन्तो वा सम्यक्त्वदेशविरतिसर्वविरतिलक्षणशिक्षाप्रदानेन, मोक्षं यान्तीति योगः, शेषं तथैव ॥ १९ ॥ 'वयणा' इति वचनमेवामृतं वचनामृतं क्षुत्पिपासादिदोषापहारकत्वात् तेन वचनामृतेन भुवनं—लोकं निर्वाप्य—तस्य तृप्तिमुत्पाद्य निर्वापयन्तो वा प्रीणयन्तः आप्याययन्त इत्यर्थः, तथा गुणेषु—उत्तरोत्तरगुणस्थानकेषु सम्यक्त्वदेशविरतिप्रमत्ताप्रमत्ता-

दिकेषु प्रागुक्तं भुवनमेव स्थापयित्वा स्थापयन्तो वा सदुपदेशवशात्तानि प्रापयन्त इत्यर्थः, तथा जीवलोकं-भव्यजीवलोकं, अभव्यास्तु तीर्थकरोपदेशेनापि नावबुध्यन्ते, तमुद्धृत्य उध्धरन्तो वा भवान्धकूपात् स्ववचनरज्जुनाऽऽकर्षयन्त इत्यर्थः, शेषं पूर्ववत् ॥ २० ॥ 'अच्चब्भुअ' त्ति अत्यद्भुता-अन्येष्वसंभविनो ये गुणाः-प्रातीहार्यादिलक्षणाः अन्ये वा रूपादयस्ते विद्यन्ते येषां ते अत्यद्भुतगुणवन्तस्तान्, तथा निजयश एव शशधरः-चन्द्रस्तेन प्रसाधिता-विभूषिता दिगन्ता-दिक्पर्यन्ता यैः 'पयासिअ' त्ति पाठे प्रकाशिता वा यैस्तान् नियतं शाश्वतं यथा भवत्येवं सदैवेत्यर्थः, न आदि न चान्तो येषां ते अनाद्यनन्तास्तान् शरणं प्रपन्नः तानाश्रित इत्यर्थः, एतेन कालत्रयभाविनोऽनंता अपि जिना गृहीताः ॥ २१ ॥ अथ कृतार्हच्छरणो विशेषेण तेषां नमस्कारमाह-'उज्झि'त्ति, उज्झितानि-त्यक्तानि जरामरणानि यैस्तत्कारणकर्मरहितत्वात्ते उज्झितजरामरणास्तेभ्यः, समस्तानि-सम्पूर्णानि यानि दुःखानि तैरार्ता ऋता वा-पीडिता ये सत्त्वाः-प्राणिनस्तेषां शरण्याः-शरणे साधवस्तेभ्यः, यद्वा समास्तं-निष्ठां गतं दुःखं येषां ते समाप्तदुःखाः, तथा आर्ता-जन्मजरामरणादिदुःखैः पीडिता ये सत्त्वास्तेषां शरण्याः, समाप्तदुःखाश्च ते आर्तसत्त्वशरण्याश्चेति विशेषणकर्मधारयः तेभ्यः, तथा त्रिभुवनजनानां सुखं ददति निजावतारेणेति त्रिभुवनजनसुखदास्तेभ्यः, सर्वत्र चतुर्थ्यर्थे षष्ठी 'छट्ठीविभत्तीइ भण्णइ चउत्थी' इति प्राकृतसूत्रबलात्, तेभ्यः-पूर्वोक्तगुणेभ्योऽर्हद्भ्यो नमो-नमस्कारोऽस्तु ॥ २२ ॥ अथ द्वितीयं शरणं यथा प्रतिपद्यते तथाऽऽह-



अरिहंतसरणमलसुद्धिलद्धसुविसुद्धसिद्धबहुमाणो ।
पणयसिररइअकरकमलसेहरो सहरिसं भणइ ॥ २३ ॥

कम्मट्ठक्खयसिद्धा साहाविअनाणदंसणसमिद्धा ।
सवट्ठलद्धिसिद्धा ते सिद्धा हुंतु मे सरणं ॥ २४ ॥
तिअलोयमत्थयत्था परमपयत्था अचिंतसामत्था ।
मंगलसिद्धपयत्था सिद्धा सरणं सुहपसत्था ॥ २५ ॥
मूलुक्खयपडिवक्खा अमूढलक्खा सजोगिपच्चक्खा ।
साहाविअत्तसुक्खा सिद्धा सरणं परममुक्खा ॥ २६ ॥
पडिपिल्लिअपडिणीआ समग्गझाणग्गिदड्ढभवबीआ ।
जोईसरसरणीया सिद्धा सरणं समरणीआ ॥ २७ ॥
पाविअपरमाणंदा गुणनिस्संदा विदिन्नभवकंदा ।
लहुईकयरविचंदा सिद्धा सरणं खविअदंदा ॥ २८ ॥
उवलद्धपरमबंभा दुल्लहलंभा विमुक्कसंरंभा ।
भुवणघरधरणखंभा सिद्धा सरणं निरारंभा ॥ २९ ॥

'अरिहंत'त्ति अर्हन्तां शरणमर्हच्छरणं तेन पूर्वोक्तेन या मलस्य-कर्मरजसः शुद्धिस्तया लब्धः शुद्धो-निर्मलः सिद्धान् प्रति बहुमानो-भक्तिर्येन स तथा, 'सुविसुद्ध'त्ति पाठे तु सुष्ठु-अतिशयेन विशुद्धो-निर्मल इत्यर्थः, पुनः किं-

भूतः ?-प्रणतं-भक्तिवशेन नम्रीभूतं यच्छिरस्तत्र रचितः करकमलाभ्यां शेखरो येन स तथा, एवंभूतः सन् सहर्षं भणति ॥ २३ ॥ यच्चायं भणति तद्गाथाषट्केनाह-'कम्मट्ठ'त्ति, कर्माष्टकक्षयेण सिद्धाः-प्रसिद्धाः ते तीर्थसिद्धादिभेदेन पञ्चदशधा, तानाह-तीर्थसिद्धाः प्रसन्नचन्द्रसनत्कुमारादयः १ अतीर्थसिद्धा मरुदेव्यादिकाः २ गृहलिङ्गसिद्धाः पुण्याढ्यादिकाः ३ अन्यलिङ्गसिद्धा वल्कलचीर्यादिकाः ४ स्वलिङ्गसिद्धा जम्बूस्वाम्यादिकाः ५ स्त्रीलिङ्गसिद्धा राजीमत्यादिकाः ६ नरसिद्धा भरतादिकाः ७ कृत्रिमनपुंसकसिद्धाः गुणसेनादिकाः ८ प्रत्येकबुद्धसिद्धा नमिराजादिकाः ९ स्वयंबुद्धसिद्धाः समुद्रपालादिकाः १० बुद्धबोधितसिद्धाः त्रिकाधिकपञ्चदशशततापसादिकाः ११ एकसिद्धाः गजसुकुमालादिकाः १२ अनेकसिद्धा भरतपुत्रादिकाः १३ अजिनसिद्धाः पुण्डरीकगौतमादिकाः १४ जिनसिद्धा आदिनाथादिकाः १५ पुनः कथंभूताः ?-स्वाभाविके-निरावरणे ये अनवच्छिन्ने ज्ञानदर्शने ताभ्यां समृद्धाः-स्फीताः स्फातिमन्तः, तथाऽर्थ्यन्ते-अभिलष्यन्ते इत्यर्थाः सर्वे च तेऽर्थाश्च तेषां लब्धयः-प्राप्तयः सर्वार्थलब्धयः सिद्धा-निष्पन्नाः सर्वार्थलब्धयो येषां ते तथा, सिद्धसर्वकार्याः-प्राप्तसर्वसुखज्ञानादिभावाः कृतकृत्या इत्यर्थः, आर्षत्वात् सिद्धशब्दस्याग्रे निपातः, सर्वार्थलब्धिभिः सिद्धानिष्ठिता इत्येवं वा समासः, ते सिद्धा मम शरणं भवन्तु ॥ २४ ॥ 'तिअलोय'त्ति, त्रैलोक्यस्य-चतुर्दशरज्ज्वात्मकस्य यन्मस्तकं-सर्वोपरिवर्तिस्थानं पञ्चचत्वारिंशल्लक्षयोजनविस्तीर्णेषत्प्राग्भाराख्यसिद्धिशिलाया उपरितनयोजनसत्कोपरितनचतुर्विंशतितमभागरूप आकाशदेशस्तत्र तिष्ठन्तीति त्रैलोक्यमस्तकस्थाः, तथा परमपदं-मोक्षपदं सर्वकर्मरहितत्वरूपं तद्धेतुत्वाच्चारित्रादिक्रियाकलापस्य तत्र तिष्ठन्तीति ते तथा, अचिन्त्यमनन्तत्वात् सामर्थ्यं-जीवशक्तिविशेषो बलं



येषां ते तथा, मङ्गलरूपाः सिद्धाः-सम्पन्नाः पदार्था येषां ते तथा, यद्वा सांसारिकदुःखरहितं मङ्गलभूतं यत् सिद्धिपदं तत्र तिष्ठन्ति इति ते तथा, ते सिद्धाः शरणं भवन्तु, पुनः कथंभूताः ?-सुखेन जन्मजरामरणक्षुत्तृषाद्याबाधारहितेन मुक्तिप्रभवेन प्रशस्ताः अव्याकुला अनन्तसुखा इत्यर्थः ॥ २५ ॥ 'मूलुक्खय'त्ति, मूलादुत्खाताः-उन्मूलिताः प्रतिपक्षाः-कर्मरूपा यैस्ते तथा, समूलनिर्मूलितकर्माण इत्यर्थः, 'मूलक्खए'त्ति पाठेऽयमर्थो-मूलस्य-संसारहेतुकर्मबन्धमूलस्य मिथ्यात्वाविरतिकषाययोगरूपस्य शत्रुसङ्घातस्य क्षये कर्तव्ये प्रतिपक्षा इव-वैरिण इव तज्जयं कृतवन्त इत्यर्थः, तथा लक्ष्ये-द्रष्टव्यपदार्थे न मूढा अमूढलक्षाः सदोपयुक्तत्वात्तेषां, तथा सयोगिनां-सयोगिकेवलिनामेव प्रत्यक्षा-दृश्याः, शेषज्ञानिनां अविषयत्वात् सिद्धानां, तथा स्वाभाविकं-अकृत्रिममात्तं-गृहीतमाप्तं-प्राप्तं वा सुखं यैस्ते तथा, पुनः किंविशिष्टाः ?—परमः-प्रकृष्टोऽत्यन्तं विगमात्कर्मभिः सह मोक्षो-वियोगः पृथग्भावो येषां ते तथा, ते सिद्धाः शरणं भवन्तु ॥ २६ ॥ 'पडिपिल्लिअ'त्ति, प्रतिप्रेरिताः-क्षिप्ता अनादृता इत्यर्थः प्रत्यनीकाः-शत्रवो यैः समशत्रुमित्रत्वात्, यद्वा प्रतिप्रेरिता-निराकृताः प्रत्यनीका-रागाद्यान्तरशत्रवो यैस्ते तथा, समग्रं-सम्पूर्णं यद्ध्यानं परमलयः शुक्लध्यानमित्यर्थः तदेवाग्निः-वह्निस्तेन दग्धं-भस्मसात्कृतं भवस्य-संसारस्य बीजं-ज्ञानावरणीयादि कर्म यैस्ते तथा, योगीश्वरा-गणधराश्छद्मस्थतीर्थकरा वा तैः शरणीयाः-आश्रयणीया नमस्करणध्यानादिना, तथा स्मरणीया-ध्येया मोक्षसुखाभिलाषुकाणां भव्यानामिति शेषः, एवंविधाः सिद्धाः शरणं भवन्तु ॥ २७ ॥ 'पाविअ'त्ति, प्रापितः-आत्मजीवं प्रति ढौकितः प्राकृतत्वाद्वा प्राप्तः परमानन्दो यैः सदामुदितत्वात्ते तथा, तथा गुणानां-ज्ञानदर्शना-

दीनां परिपाकप्राप्तत्वान्निस्स्यन्दः–सारो येषु ते तथा, सर्वसारज्ञानादिगुणा इत्यर्थः, विदीर्णो–विदारितः स्फाटितो भवस्य–संसारस्य मोहनीयादिकर्मरूपः कन्दो यैस्ते तथा, लोकालोकप्रकाशककेवलोद्योतेन लघुकीकृतौ–अल्पप्रभावीकृतौ रविचन्द्रौ यैः तदुद्योतस्य परिमितयोजनप्रकाशकत्वात्ते तथा, तथा क्षपितं–क्षयं नीतं द्वन्द्वं–संग्रामादिरूपं यैस्ते तथा, सर्वथा निष्कायत्वात्, ते एवंविधाः सिद्धाः शरणं भवन्तु ॥२८॥ 'उवलद्ध'त्ति, उपलब्धं–प्राप्तं परमब्रह्म–प्रकृष्टं ज्ञानं यैस्ते उपलब्धपरमब्रह्माणः, समवाप्तकेवलज्ञाना इत्यर्थः, तथा दुर्लभो लम्भः–लाभो मुक्तिपदप्राप्तिलक्षणो येषां, सर्वलाभाग्रेसरत्वात्तल्लाभस्य सर्वचारित्रादिक्रियाणां तल्लाभे एव साफल्याच्च, तथा विमुक्तः–परित्यक्तः करणीयपदार्थेषु संरंभः–आटोपो यैस्ते तथा, निष्पन्नसर्वप्रयोजनत्वात्तेषां, तथा भुवनं–जीवलोकस्तदेव यद्गृहमिव गृहं तस्य संसारगर्तायां पततो धरणे–रक्षणे स्तम्भा इव स्तम्भाः, तथा 'निरारम्भा' निर्गता–बहिर्भूता आरम्भेभ्यः, सर्वथा कृत्यकृतत्वात्तेषां, ते एवंभूताः सिद्धा मम शरणं–आलम्बनं भवन्तु ॥ एतेन सिद्धाख्यं द्वितीयं शरणमभिहितं ॥ २९ ॥ अथ साधुशरणं प्रतिपित्सुर्यदभिधत्ते तदाह—

सिद्धसरणेण नयबंभहेऊ साहुगुणजणिअअणुराओ ।
मेइणिमिलन्तसुपसत्थमत्थओ तत्थिमं भणइ ॥ ३० ॥
जिअलोअबंधुणो कुगइसिंधुणो पारगा महाभागा ।

१ भुवनं-त्रिभुवनं तदेव गृहं तस्य धरणं-अवष्टम्भनं तत्र स्तम्भा इव स्तम्भाः, भुवनलोकस्य दुर्गतौ पततः स्वशरणप्रतिपत्तुः स्थिराधारभूतत्वात्तेषां ( इति प्रत्यन्तरे )



नाणाइएहिं सिवसुक्खसाहगा साहुणो सरणं ॥ ३१ ॥
केवलिणो परमोहिविउलमइसुअहरा जिणमयंमि ।
आयरियउवज्झाया ते सव्वे साहुणो सरणं ॥ ३२ ॥
चउदस दसनवपुव्वी दुवालसिक्कारसंगिणो जे अ ।
जिणकप्पअहालंदिअ परिहारविसुद्धिसाहू अ ॥ ३३ ॥
खीरासवमहुआसव संभिन्नस्सोअकुट्ठबुद्धी अ ।
चारणवेउव्विपयाणुसारिणो साहुणो सरणं ॥ ३४ ॥
उज्झिअवयरविरोहा निच्चमदोहा पसंतमुहसोहा ।
अभिमयगुणसंदोहा हयमोहा साहुणो सरणं ॥ ३५ ॥
खंडिअसिणेहदामा अकामधामा निकामसुहकामा ।
सुपुरिसमणाभिरामा आयारामा मुणी सरणं ॥ ३६ ॥
मिल्हिअविसयकसाया उज्झिअघरघरणिसंगसुहसाया ।
अकलिअहरिसविसाया साहू सरणं गयपमाया ॥ ३७ ॥
हिंसाइदोससुन्ना कयकारूण्णा सयंभुरुप्पण्णा ।

अजरामरपहखुण्णा साहू सरणं सुकयपुण्णा ॥ ३८ ॥
कामविडंबणचुक्का कलिमलमुक्का विमुक्कचोरिक्का ।
पावरयसुरयरिक्का साहू गुणरयणचच्चिक्का ॥ ३९ ॥
साहुत्ति सुट्ठिआ जं आयरिआई तओ अ ते साहू ।
साहुगहणेण गहिआ तम्हा ते साहुणो सरणं ॥ ४० ॥

'सिद्ध'त्ति, नया–नैगमादयस्तैरुपलक्षितं यद्ब्रह्म–श्रुतज्ञानं द्वादशाङ्गरूपं 'नयभङ्गप्रमाणगमगहन'मिति वचनात्तस्य नयब्रह्मणो ये हेतवः–कारणभूताः साधुगुणा–विनयादयो, विनयादिगुणसम्पन्नस्यैव श्रुतावाप्तेः, तेषु नयब्रह्महेतुषु साधुगुणेषु जनितः–उत्पादितोऽनुरागो–बहुमानो यस्य स नयब्रह्महेतुसाधुगुणजनितानुरागः शरणप्रतिपत्ता साध्वादिः–केनास्यानुरागः कृत इत्याह–सिद्धशरणेन–पूर्वोक्तेन, पुनः कथंभूतः सः ?–मेदिन्याः–पृथ्व्या मिलत्–लुठत् सुप्रशस्तं भक्तिभरनम्रत्वान्मस्तकं–उत्तमाङ्गं यस्य स मेदिनीमिलत्सुप्रशस्तमस्तकः, एवंविधः स साधुगुणरागी भूतलन्यस्तमौलिः सन् तत्रेति–शरणप्रस्तावे इदं–वक्ष्यमाणं भणति–वक्ति ॥ ३० ॥ यदयं भणति तन्नवभिर्गाथाभिराह–'जिअलोअ'त्ति, जीवलोकस्य–प्राणिवर्गस्य षड्जीवनिकायात्मकस्य त्रिविधं त्रिविधेन रक्षाकारित्वात् बन्धव इव बन्धवः, कुत्सिता गतिः कुगतिः, नरकतिर्यगादिरूपा सैव सिन्धुः–महानदी समुद्रो वा तस्यास्तस्य वा पारं–तीरं गच्छन्तीति पारगाः–तीरवर्तिनः सुगतिगामित्वादेव साधूनां, तथा महान् भागः–अतिशयविशेषो येषां ते तथाऽनेकलब्धिसम्पन्नत्वात्तेषां, तथा ज्ञानादिकैः–ज्ञानदर्श-



नचारित्रैरेव शिवसौख्यं–मोक्षशर्म साधयन्ति ये ते शिवसौख्यसाधकाः, एतेन तीर्थान्तरीयैर्यत्स्नानादिक्रियाभिर्मोक्षसाधनमुक्तं तन्निरासः कृतो द्रष्टव्यः, त एवंविधाः साधवो मम शरणं भवन्तु ॥ ३१ ॥ साधुभेदानाह–'केवलं'असहायं-मत्यादिज्ञानानपेक्षं सर्वद्रव्यपर्यायादिविषयं ज्ञानं विद्यते येषां ते केवलिनः, 'परमोहि'त्ति अवधिः–मर्यादा रूपिद्रव्येषु प्रवृत्तिरूपा तदुपलक्षितं ज्ञानमप्यवधिः परमश्चासाववधिश्च परमावधिः यदुत्पत्तेरनन्तरमवश्यमन्तर्मुहूर्त्तेन केवली भवति उत्कृष्टमवधिज्ञानमित्यर्थस्तद्योगात्साधवोऽपि परमावधयः, उत्कृष्टावधिसाधुभणनेन जघन्यमध्यमावधयोऽपि साधवोऽन्तर्भाविता ज्ञेयाः, 'विउलमइ'त्ति मनःपर्यायज्ञानं द्विधा–ऋजुमतिविपुलमतिभेदात्, तत्र विपुला मतिर्ऋजुमत्यपेक्षया विशिष्टज्ञानवत्त्वेन येषां ते विपुलमतयः, इह विपुलमतिग्रहणेन ऋजुमतयोऽपि गृहीता ज्ञातव्याः, द्वयेषामप्येषां मनुष्यक्षेत्रान्तर्वर्तिसंज्ञिपञ्चेन्द्रियमनोद्रव्यपरिच्छेदकत्वात्, बह्वल्पपर्यायग्रहणादिनैव विशेषाच्च, तथा श्रुतं–कालिकोत्कालिकाङ्गप्रविष्टानङ्गप्रविष्टादिलक्षणं सूत्रार्थोभयरूपं धरन्ति–योग्यशिष्यप्रशिष्यादिप्रदानेनाव्यवच्छिन्नं कुर्वन्तीति श्रुतधराः सामान्यतः सर्वेऽपि विशेषेण तु आचर्यन्ते–आसेव्यन्ते मोक्षार्थिभिरित्याचार्याः–पञ्चविधाचारधारिणः सूत्रार्थोभयवेदिनो गच्छावलम्बनभूताः षट्त्रिंशद्गुणवन्तोऽर्थव्याख्यानकारिणः, उपेत्य–आगत्य अधीयते येभ्य इत्युपाध्यायाः–सूत्रार्थोभयवेदिनो द्वादशाङ्गसूत्राध्यापका उपाध्यायाः, एते च आचार्योपाध्यायाः सामान्यतो लौकिकाः कलाचार्यादयोऽपि लभ्यन्ते इति तद्व्यवच्छेदायाह—'जिणमयंमि'त्ति जिनमते–जिनशासने ये आचार्योपाध्यायाः, एतद्ग्रहणं चोपलक्षणम्, तेन प्रवर्तकस्थविरगणावच्छेदका अप्यत्र गृहीता ज्ञातव्याः, सर्वशिष्यान् तपःसंयमव्यापारेषु प्रवर्तयन्तो गणतप्तिकराः प्रवर्तका

उच्यन्ते, प्रवर्तकव्यापारितार्थेषु सीदमानान् साधून् स्थिरीकुर्वन्तः स्थविराः, गच्छयोग्यक्षेत्रोपध्यादिसंपादनार्थं नवनवक्षेत्रविहारकारिणो गणावच्छेदकाश्च, ते च सर्वे केवलिप्रभृतिसाधवः शरणं भवन्तु ॥ ३२ ॥ तथा चतुर्दश पूर्वाणि विद्यन्ते येषां ते चतुर्दशपूर्विणः श्रीप्रभवादयः दशाद्यान्येव पूर्वाणि येषां ते दशपूर्विणः श्रीआर्यमहागिर्यादयः, अन्त्यानि चत्वारि पूर्वाणि प्रायः समुदितान्येव व्युच्छिद्यन्ते इति चतुर्दशपूर्व्यनन्तरं दशपूर्विणोऽभिहिताः, तथा नवपूर्विण श्रीआर्यरक्षितादयः, पूर्वीशब्दः स्थानत्रयेऽपि संबध्यते, तथा 'दुवालस'त्ति अग्रेतनाङ्गीशब्दसंबन्धात् द्वादशाङ्गिनः, ननु चतुर्दशपूर्विणां द्वादशाङ्गिनां च को भेद इति चेद्, उच्यते, द्वादशमङ्गं दृष्टिवादः, स च परिकर्म १ सूत्र २ पूर्वानुयोग ३ पूर्वगत ४ चूलिका ५ भेदात्पञ्चविधः, पूर्वाणि च चतुर्दशापि पूर्वगतमध्ये सन्ति द्वादशाङ्गस्यैकदेशभूतान्येवेति पूर्वधरद्वादशाङ्गधरभेदसिद्धिः, तथा एकादशाङ्गिनश्च ये च, चकारो भिन्नक्रमसूचकः, संप्रति विशेषानुष्ठानिन आह–'जिणकप्प'त्ति एकाकित्वेन निष्प्रतिकर्मशरीरतया च जिनस्येव कल्पः–आचारो येषां ते जिनकल्पिका–दुष्करक्रियाकारिणः 'अहालंदिअ'त्ति उदकार्द्रः करो यावता कालेन शुष्यति तत् जघन्यं लन्दं तत आरभ्योत्कृष्टं पञ्चरात्रिन्दिवलक्षणं तदत्र गृह्यते, उत्कृष्टलन्दस्यानतिक्रमेण चरन्तीति यथालन्दिकाः, पञ्चको गणोऽमुं कल्पं प्रतिपद्यते, मासकल्पक्षेत्रं च गृहपङ्क्तिरूपाभिः षड्भिः वीथिभिर्जिनकल्पिकवत् परिकल्पयन्ति, एकैकस्यां च वीथ्यां पञ्च पञ्च दिनानि पर्यटन्ति, जिनकल्पिकास्त्वेकमेव दिनं सप्तम एव दिने पुनस्तस्यां वीथ्यां समागच्छन्ति इत्येतेषां भेदः, तथा परिहारविशुद्धिकाश्च साधवः, ते चैवं–नव साधवोऽमुं कल्पं प्रतिपद्यन्ते, तेषां मध्ये षण्मासान् यावत् चत्त्वारस्तपः कुर्वन्ति, चत्वारोऽनुपारिहारिकत्वमेकश्च कल्पस्थितत्वं–गुरुत्वमित्यर्थः, एते पञ्चापि निर्लेपाचाम्लभोजिनः, पारिहारिकाणां ग्रीष्मे चतुर्थषष्ठाष्टमरूपं शिशिरे षष्ठाष्टमदशमरूपं वर्षास्वष्टमदशमद्वादशमरूपं जघन्यमध्यमोत्कृष्टभेदं तपः, पारणके च तेषां नित्यमाचाम्लं, द्वितीयषण्मासाननुपारिहारिकाः पारिहारिकत्वं पारिहारिकाश्चानुपारिहारिकत्वं प्रतिपद्यन्ते, तृतीयषण्मासान् कल्पस्थितः पूर्वोक्तं पारिहारिकतपः अपरेऽष्टापि निर्लेपाचाम्लतपः कुर्वन्ति, एवमष्टादशभिर्मासैरयं कल्पः परिपूर्णो भवति, तत्समाप्तौ च तमेव कल्पं जिनकल्पं वा प्रतिपद्यन्ते गच्छं वा समायान्ति, चः सर्वेषां समुच्चये, विशेषलब्धिसंपन्नान् साधूनाह–'खीरासव'त्ति चक्रवर्तिसम्बन्धिनो गोलक्षस्य भक्षितेक्षुक्षेत्रादिविशेषाहारस्यार्द्धार्द्धक्रमेण पीतगोक्षीरस्य पर्यन्ते यावदेकस्या गोः सबन्धि यत्क्षीरं तदिव येषां वचनं माधुर्यरसमाश्रवति–मुञ्चतीति क्षीराश्रवाः, मधु–शर्करादि मधुरद्रव्यं तद्रसतुल्यं वचनं येषां ते मध्वाश्रवाः, उपलक्षणत्वात्सर्पिराश्रवा अपि गृह्यन्ते, ते च सुगन्धघृतरसतुल्यवचनाः, तथा 'संभिन्नसोअ'त्ति ये सर्वैः शरीरावयवैः शृण्वन्ति जानन्ति च चक्रवर्तिस्कन्धावारसत्कमनुष्यतिरश्चां कोलाहलशब्दसंदोहान् अयमेतस्यायमेतस्येत्यादिव्यक्त्या पृथक् पृथक् भिन्नान् व्यवस्थापयन्ति इति वा संभिन्नश्रोतसः, 'कुट्ठबुद्धिय'त्ति नीरन्ध्रकोष्ठकक्षिप्तधान्यवद् ये सुनिश्चितस्थिरसंस्कारसूत्रार्थास्ते कोष्ठबुद्धयः, 'चारण'त्ति अतिशयचरणाच्चारणाः, ते द्विधा–जङ्घाचारणा विद्याचारणाश्च, तत्राद्या एकोत्पातेन रुचकवरद्वीपं यान्ति ततः प्रतिनिवृत्ता द्वितीयोत्पातेन नन्दीश्वरे तृतीयोत्पातेन यतो गतास्तत्रायान्ति, ऊर्ध्वदिशं त्वाश्रित्य ते प्रथमोत्पातेन पाण्डुकवनं द्वितीयोत्पातेन नन्दनवनं तृतीयोत्पातेन यतो गतास्तत्रायान्ति, तपोलब्धेः प्रयुज्यमानाया ह्रासभवनात्, विद्याचारणास्तु प्रथमोत्पातेन मानुषोत्तरनगं

द्वितीयोत्पातेन नन्दीश्वरं तृतीयोत्पातेन यतो गतास्तत्रायान्ति, ऊर्द्ध्वं तु प्रथमोत्पातेन नन्दनवनं द्वितीयोत्पातेन पाण्डुकवनं तृतीयोत्पातेन यतो गतास्तत्रायान्ति, विद्यायाः प्रयुज्यमानाया वृद्धिभवनात्, तथाऽन्येऽपि बहुप्रकाराश्चारणा भवन्ति साधवः, तद्यथा–आकाशगामिनः पर्यङ्कावस्थानिषण्णाः कायोत्सर्गस्थशरीरा वा पादोत्क्षेपक्रमं विनापि व्योमचारिणः, केचित्तु फलपुष्पपत्रहिमवदादिगिरिश्रेणिअग्निशिखानीहारावश्यायमेघवारिधारामर्कटतन्तुज्योतीरश्मिपवनाद्यालम्बनगतिपरिणामकुशलाः तथा वापीनद्यादिजले तज्जीवानविराधयन्तो भूमाविव पादोत्क्षेपनिक्षेपकुशला जलचारणाः, तथा भुव उपरि चतुरङ्गुलप्रमिते व्योम्नि पादोत्क्षेपनिक्षेपकुशला जंघाचारणा इति, 'विउव्वि'त्ति वैक्रियलब्धिमन्तः साधवः, ते च वैक्रियशक्त्या नानारूपैरसङ्ख्येयानपि द्वीपान् समुद्रांश्च पूरयन्ति, जम्बूद्वीपं तु मनुष्याद्यन्यतररूपैर्बिभ्रति, 'पयाणुसारि'त्ति ये पूर्वापरपदानुसारतः स्वयं त्रुटितं पदमनुसरन्ति–पूरयन्ति ते पदानुसारिणः, इह चोपलक्षणत्वादामर्षौषध्यादिलब्धिसंपन्नाः साधवोऽत्र ज्ञेयाः, एते एवंविधभेदभिन्नाः साधवो मे शरणं भवन्तु ॥ ३४ ॥ अथ सर्वसाधुसाधारणगुणा ये साधवस्तान् गाथापञ्चकेनाह–वैरं–प्रभूतकालजं श्रीवीरजिनं प्रति त्रिपृष्ठभवनिहतसिंहजीवहालिकब्राह्मणस्य कपिलस्येव विरोधः–कुतश्चित्कारणात्तत्कालसम्भवोऽप्रीतिविशेषः, प्रतिमार्थे उद्रायनचण्डप्रद्योतयोरिव, अथवा वैरहेतवो विरोधाः वैरविरोधा उज्झिताः–त्यक्ता वैराणि विरोधाश्च यैस्ते तथा, यत एवोज्झितवैरविरोधा अत एव नित्यं–सततमद्रोहाः-परद्रोहवर्जिताः,वैरवत एव परद्रोहाभिप्रायसद्भावात्, यत एवाद्रोहा अत एव प्रशान्ता-प्रसन्ना मुखशोभा-वदनच्छाया येषां ते तथा, परद्रोहिणां हि मुखं विकरालं स्यादिति, यत एवंरूपा अत एवाभिमतः–प्रशस्यः, पाठान्तरेऽभिगतस्सहचारी वा गुणसंदोहो–गुणनिकरो येषां ते तथा, एवंविधानां च ज्ञानातिशयः स्यादिति हतो मोहः–अज्ञानं यैस्ते तथा ज्ञानिन इत्यर्थः, ते साधवः शरणं भवन्तु ॥ ३५ ॥ खण्डितानि–त्रोटितानि स्नेहरूपाणि दामानि–रज्जवः आर्द्रकुमारेणेव आत्मनो हस्तिनो वा यैस्ते खण्डितस्नेहदामानः छिन्नस्नेहनिगडा इत्यर्थः, यत एवंरूपा अत एव न विद्यते कामो–विषयाभिलाषो धामानि च–गृहाणि येषां, छिन्नस्नेहत्वे एव विषयगृहाणां त्यागः स्यादिति, अथवा न विद्यन्ते कामधामानि–विषयगृहाणि येषां ते तथा, विषयासक्तिहेतुरम्यमन्दिररहिता इत्यर्थः, अथवा न कामस्य धाम–स्थानं अकामधामाः, प्राकृतत्वात्पुंस्त्वं, यत एवंविधा अत एव निष्कामं–निर्विषयं यत्सुखं–मोक्षसंबन्धि तद्विषयोऽभिलाषो येषां ते तथा, निर्विषयस्यैव शिवशर्माभिलाषुकत्वात् मोक्षसुखाभिलाषिण इत्यर्थः, तथा सत्पुरुषाणां–आचार्यादीनां इङ्गिताकारसम्पन्नत्वादिना स्वविनयेन वन्दारूणां स्वशान्तत्वादिना दमदन्तेनेव युधिष्ठिरादीनां मनः–चित्तमभिरमयन्ति—आनन्दयन्तीति सत्पुरुषमनोऽभिरामाः, तथा त्यक्तान्यकृत्यत्वादात्मानं तासु तासु प्रवचनोक्तक्रियासु रमयन्ति–क्रीडयन्तीत्यात्मारामाः, यद्वा आराममिव–भव्यजीवानां क्रीडास्थानमिव आत्मा येषां हर्षहेतुत्वात्ते तथा, अथवा आचारं—पञ्चप्रकारममन्ति—गच्छन्तीत्याचारामाः मन्यन्ते—बुध्यन्ते जगतः कालत्रयावस्थामिति मुनयः–साधवस्ते शरणं भवन्तु ॥ ३६ ॥ 'मिल्हिअ'त्ति मिल्हिताः–अपास्ता विषयाः–शब्दाद्याः कषायाश्च–क्रोधाद्या यैस्ते तथा, विषयकषायरहिता इत्यर्थः, तथा गृहं—अगारं गृहिणी–कलत्रं तयोः सङ्गः–संबन्धस्तस्माद्यः सुखास्वादः–सुखानुभवः स उज्झितः–परिहृतो यैस्ते तथा निष्परिग्रहा निस्सङ्गाश्चेत्यर्थः, तथा न कलितौ–नाश्रितौ हर्षविषादौ–प्रमोदवैमनस्ये यैस्ते

॥ ६८ ॥

तथा, समभावव्यवस्थिता इत्यर्थः, तथा गतः प्रमादो येभ्यस्ते तथाऽप्रमत्ता इत्यर्थः, 'विहुअसोआ' इति तु पाठे विधूतानि श्रोतांसि–आश्रवद्वारलक्षणानि यैः यद्वा विधुतः–क्षिप्तः शोकः–चित्तखेदो यैस्ते तथा, विधूतासंयमस्थाना गतशोका वेत्यर्थः, ते साधवः शरणं भवन्तु ॥ ३७ ॥ हिंसा आदिर्येषां ते हिंसादयः ते च ते दोषाश्च, आदिशब्दादलीकभाषणपरस्वापहारस्त्रीसेवापरिग्रहादीनां ग्रहः, हिंसादिदोषैः शून्याः–तैर्विरहिता इत्यर्थः, तथा कृतं–विरचितं कारुण्यं–जीवलोकोपरि दुःखप्रहाणेच्छा यैस्ते तथा सर्वजीवेषु कृपार्द्रचेतस इत्यर्थः, तथा जीवाजीवादिपदार्थानां जिनोक्तानां यथास्थितत्वेन रोचनं–मननं श्रद्धानं रुक् सम्यक्त्वमित्यर्थः प्रज्ञानं प्रज्ञा—बुद्धिः सम्यग्ज्ञानमित्यर्थः, स्वयं भवति इति स्वयम्भूः स्वयम्भुवौ रुक्प्रज्ञे—सम्यक्त्वज्ञाने येषां ते स्वयम्भूरुक्प्रज्ञा यद्वा स्वयंभुवा–स्वयम्भूतेन सम्यक्त्वेन क्षायिकादिना पूर्णाः, दूरीकृतमिथ्यात्वा इत्यर्थः, 'पुन्न' इति पाठे इयं व्याख्या, यद्वा स्वयंभूशब्देन स्वयम्भूरमणः समुद्र उच्यते 'भीमो भीमसेन' इति वत्, ततस्तत्तुल्ये विस्तीर्णे ऋक्प्रज्ञे तेषां ते तथा, अथवा 'स्वयम्भरुप्पन्ना' इति पाठे स्वयंभराः—आत्मनिर्वाहकाः कस्याप्यनाश्रितत्वेनोत्पन्ना–व्यवस्थिताः स्वयंभरोत्पन्नाः, तथा न विद्यते जरामरौ यत्र तदजरामरं–निर्वाणं तस्य पथो–मार्गस्तदुपदर्शकत्वात्प्रवचनशास्त्राणीत्यर्थः तेषु क्षुण्णाः–निपुणाः, सम्यक्कृतत्त्वस्य वेदिन इत्यर्थः, क्षुण्णः–पुनः पुनः परिशीलनेनासेवितोऽजरामरपथो–मोक्षमार्गो ज्ञानदर्शनचारित्रलक्षणो यैस्ते तथा, प्राकृतत्वात् क्षुण्णशब्दस्य परनिपातः, 'अजरामरबहुखुन्ना' इति पाठे तु अजरामरे–निर्वाणे वर्णयितव्ये बहु प्रभूतं यथा भवत्येवं क्षुण्णाः-सम्यग्मोक्षस्वरूपप्रकाशका इत्यर्थः, ते साधवः शरणं भवन्तु, पुनः किंभूतः–सुट्ठु–अतिशयेन कृतं पुण्यं–चारित्रप्राप्तिलक्षणं एष्यद्भवयोग्यं



स्वर्गादिलाभलक्षणं वा यैस्ते सुकृतपुण्याः, यद्वा सुकृतैः–तपःप्रभृतिभिः पूर्णा–भृताः संचितप्रभूततपस इत्यर्थः ॥ ३८ ॥ काम्यते–अभिलष्यते विषयार्थिभिरिति कामस्तस्य कामस्य—स्मरजनितविकारस्य या विडम्बना—नाना विक्रियास्ताभिः परिवेष्टनं तस्याः 'चुक्क' त्ति प्राकृतत्वाच्च्युतास्तया रहिता ज्ञातपरमार्थत्वात् तां त्यक्तवन्त इत्यर्थः, तथा कलिमलं—पापं तेन मुक्ताः पवित्रचारित्रनीरेण तं प्रक्षालितवन्त इत्यर्थः, तथा 'विविक्क' त्ति विविक्तं–अदत्तादाननियमेन आत्मनः पृथक्कृतं चौरिक्यं–चौर्यं यैस्ते तथा स्वामिजीवतीर्थकृद्गुर्वननुज्ञातवस्त्रभक्तपानादिग्रहणेन सर्वथापि तं परिहृतवन्त इत्यर्थः, तथा पातयति दुर्गतौ जीवानिति पापं तदेव रजः पापरजः तत्कारणत्वात् पापरजश्च तत्सुरतं–मैथुनं च पापरजःसुरतं तेन रिक्थाः–तत्त्यागिनो, नवगुप्तिसनाथब्रह्मव्रतधरणाद्, एवंविधाः साधवः शरणं, किंभूताः साधवः ?–गुणा–व्रतषट्कादयः त एव रत्नानि तैः चच्चिक्क त्ति–दीप्तिमन्तस्तैर्मण्डिता इत्यर्थः, यद्वा साधूनां गुणाः साधुगुणा इत्येवं कार्यं, प्राकृतत्वाद्दीर्घत्वं, साधव इति विशेष्यं तु प्रस्तावादेव लभ्यते ॥ ३७ ॥ नन्वत्र साधुशरणाधिकारे ज्येष्ठपदवर्तित्वेनाचार्यादयः कथं गृह्यन्ते इति संशयापनोदायाह–साधुत्वे–साधुस्वरूपे समभावपरसाहाय्यदानमुक्तिसाधकयोगसाधनादिलक्षणे सुट्ठु–अतिशयेन स्थितास्तत्सेविन इत्यर्थः यद्वा साधुत्वेन सुस्थिताः–समाहिताः साधुत्वसुस्थिताः यद्–यस्मात्कारणादाचार्यादयः पञ्चापि ततश्च ते पञ्चापि साधव उच्यन्ते, तत्कार्यकरणात्, तस्मात्साधुभणितेन–साधुसत्कोच्चारेण गृहीतास्ते सर्वेऽप्यतीतानागतवर्तमानकालभाविनोऽत्राधिकारे मम शरणं भवेयुरिति ॥ ४० ॥ उक्तं तृतीयं शरणं, अथ चतुर्थं शरणमाह—

पडिवन्नसाहुसरणो सरणं काउं पुणोऽवि जिणधम्मं ।

पहरिसरोमंचपवंचकंचुअंचियतणू भणति ॥ ४१ ॥
पवरसुकएहि पत्तं पत्तेहिवि नवरि केहिवि न पत्तं ।
तं केवलिपन्नत्तं धम्मं सरणं पवन्नोऽहं ॥ ४२ ॥
पत्तेण अपत्तेण य पत्ताणि अ जेण नरसुरसुहाणि ।
मुक्खसुहं पुण पत्तेण नवरि धम्मो स मे सरणं ॥ ४३ ॥
निद्दलिअकलुसकम्मो कयसुहजम्मो खलीकयअहम्मो ।
पमुहपरिणामरम्मो सरणं मे होउ जिणधम्मो ॥ ४४ ॥
कालत्तएवि न मयं जम्मणजरमरणवाहिसयसमयं ।
अमयं व बहुमयं जिणमयं च धम्मं पवन्नोऽहं ॥ ४५ ॥
पसमिअकामपमोहं दिट्ठादिट्ठेसु न कलिअविरोहं ।
सिवसुखफलयममोहं धम्मं सरणं पवन्नोऽहं ॥ ४६ ॥
नरयगइगमणरोहं गुणसंदोहं पवाइनिक्खोऽहं ।
निहणियवम्महजोहं धम्मं सरणं पवन्नोऽहं ॥ ४७ ॥
भासुरसुवन्नसुंदररयणालंकारगारवमहग्घं ।



निहिमिव दोगचहरं धम्मं जिणदेसिअं वंदे ॥ ४८ ॥

साधुश्रावकाद्यन्यतमो जीवः प्रतिपन्नसाधुशरणः सन् पुनरपि जिनधर्मं शरणं कर्तुं–प्रतिपत्तुमिच्छन्नित्यध्याहार्यं, इदं-वक्ष्यमाणं भणति, किंविशिष्टोऽसौ ?–प्रकृष्टो हर्षः प्रहर्षः–वदनविकासादिचिह्नगम्यो मानसः प्रीतिविशेषस्तद्वशेन यो रोमाञ्चप्रपञ्चः स एव कञ्चुकस्तेनाञ्चिता–विभूषिता तनुः–शरीरं यस्य स प्रहर्षरोमाञ्चप्रपञ्चकञ्चुकिततनुः, प्रमोदपूरिताङ्गः सन्नित्यर्थः, यद्भणति तदाह–प्रवरसुकृतैः–विशिष्टपुण्यैः प्राप्तं–लब्धं सम्यक्त्वदेशविरतिरूपं, धर्ममिति संबन्धः, अर्धपुद्गलपरावर्त्ताभ्यन्तरीभूतभवैरेव भव्यजीवैरासन्नसिद्धिकैः प्राप्यमानत्वात्, तथा पात्रैरपि–भाग्यवद्भिरपि ब्रह्मदत्तचक्र्यादिभिरिव कैश्चित् नवरीति–पुनरर्थे न प्राप्तं–नासादितं, पात्रत्वं च ब्रह्मदत्तस्य चक्रित्वलाभात्, देवेन्द्रचक्रवर्त्यादिपदानि हि भव्यानामेव भवन्तीति, तमेवंभूतं केवलिभिः–केवलज्ञानोपलब्धसमस्ततत्त्वैः प्रकाशितं धर्मं–श्रुतधर्मचारित्रधर्मरूपं शरणं प्रपन्नोऽहमिति ॥ ४२ ॥ अथ धर्मस्यैव माहात्म्यमुपदर्शयन्नाह–प्राप्तेनाप्राप्तेनापि–लब्धेनालब्धेनापि, केनेत्याह–येन जैनधर्मेण नरसुरसुखानि प्राप्तानि,तत्र प्राप्तेन यथा लब्धसम्यक्त्वेन धनसार्थवाहेन नरसुखं-युगलिकसुखं प्राप्तं, अप्राप्तेनापि च यथा तेनैव तस्मिन्नेव भवे सम्यक्त्वलाभात् पूर्वं, प्राप्तेन धर्मेण सुरसुखं बहुभिरपि श्रीवीरजीवनयसारादिभिः अप्राप्तेन धर्मेण सुरसुखं 'तावस जा जोइसिआ चरगपरिव्वाय बंभलोगो जा' इत्याद्यैर्बहुभिः कपिलादिभिरिव लब्धं, यद्वा अनेकैः भव्यैः प्राप्तेन धर्मेण नरसुरसुखानि लब्धानि, अभव्यैश्च अप्राप्तेनापि तेन, तेषामप्यागमे केवलक्रियादिबलेन नवमग्रैवेयकं यावद्गमनश्रवणात्, मोक्षसुखं पुनर्येन धर्मेण प्राप्तेनैव प्राप्यते, नान्यथा, मरुदेवाप्रभृतयोऽपि भावतश्चारित्रप-

रिणामं प्राप्यैव मोक्षं जग्मुरिति, नवरि–पुनः स धर्मो मम शरणं भवतु, अथ व्याख्यान्तरं–पात्रेण–ज्ञातिकुलसौभाग्यादिगुणयुक्तेन तथा अपात्रेणापि–गुणवियुक्तेन द्रारिद्र्याद्युपहतेनापि प्राप्तानि–लब्धानि येन कारणेन नरसुरसुखानि–मनुजदेवसमृद्धयः, तत्र पात्रेण ऋजुत्वादिगुणवता वरुणसारथिमित्रेणैव नरसुखं–विदेहेषु सुकुलोत्पत्त्यादिकं यथा प्राप्तं, अपात्रेण–दौःस्थ्याक्रांतेन कौशाम्ब्यामार्यसुहस्तिप्रव्रजितसम्प्रतिराजजीवद्रमकेणेव, पात्रेण सुरसुखं वसुदेवपूर्वभवनंदिषेणेनेव प्राप्तं, च एवकारार्थो भिन्नक्रमश्च पात्रेणेत्यत्र योज्यते, ततश्चायमर्थः नवरं–केवलं मोक्षसुखं–शिवशर्म पुनः पात्रेणैव चारित्रधर्माधारभूततथाभव्यत्वगुणलक्षणेनैव प्राप्यते, यस्य धर्मस्य प्राप्तेनैवेति शेषः, नान्यथेति, स धर्मो मम शरणं भवतु ॥ ४३ ॥ निर्दलितानि–विदारितानि तत्कर्तृजनेभ्यः कलुषाणि–मलिनानि कर्माणि येन धर्मेण स तथा, निर्धूतसर्वपाप इत्यर्थः, यत एवंविधोऽत एव कृतं शुभं जन्म कर्म वा सेवकजनेभ्यो गणधरतीर्थकरत्वादिप्राप्तिलक्षणं येन स कृतशुभजन्मा कृतशुभकर्मा वा, यत एवंविधोऽत एव खलीकृतो–वैरिवन्निर्द्धाटितो निःसारितो वा अधर्मः कुधर्मो वा सम्यक्त्ववासितान्तःकरणेभ्यो येन स तथा, तथाऽयं जिनधर्मः प्रमुखे–आदौ इहलोकेऽपि रम्यो धम्मिलादीनामिव परिणामे–परिपाकप्राप्तौ भवान्तरेऽपि दामन्नकादीनामिव रम्यो–मनोज्ञः, मिथ्यादृष्टिधर्मस्तु नैवंविधः, तस्यारम्भेऽपि पञ्चाग्नितपःप्रभृत्यादेर्महाकष्टहेतुत्वेन परिणामे परलोके च मिथ्यात्वरूपत्वाद्दुर्गतिमूलत्वेन चासुन्दरत्वात्, विषयसुखस्य तु आदौ सुन्दरत्वेऽपि परिणामे शनैः शनैः इहलोके परलोके च कटुविपाकत्वाच्च, जिनधर्मस्त्वादौ परिणामेऽपि च रम्य एव, स एवंविधो धर्मो मे शरणं भवतु ॥ ४४ ॥ कालत्रयेऽपि–अतीतानागतवर्तमानरूपे न मृतो–न विनष्टस्तं

नमृतं भरतैरवतेषु व्यवच्छेदसद्भावेऽपि महाविदेहेषु कालत्रयेऽपि धर्मस्य नैरन्तर्येण सद्भावात्, तथा जन्म च जरा च मरणं च व्याधयश्च जन्मजरामरणव्याधयस्तेषां शतानि तानि शमयतीति जन्मजरामरणव्याधिशतशमकः, सिद्धिपदप्रदानेन तन्निवारक इत्यर्थः, तं, 'सुमय'मिति पाठे तु जन्मजरामरणव्याधिशतानि सुष्ठु–अतिशयेन मृतानि–विनष्टानि यस्मात्स तथा, सद्वर्णगन्धरसोपेतं बलवर्णसौभाग्यपुष्टिजननं सर्वरोगनाशनं वस्तु अमृतमुच्यते तदिव सकललोकस्यानन्दतुष्टिपुष्टिजनकत्वाद् बहुमतः सर्वस्याप्यतिशयेनाभीष्ट इत्यर्थः, तं प्रक्रमायातं जिनधर्मं, न केवलं जिनधर्मं, किन्तु जिनप्रवचनमपि–द्वादशाङ्गरूपं पूर्वोक्तगुणसुन्दरं शरणत्वेनाहं प्रपन्नः–आश्रित इत्यर्थः ॥ ४५ ॥ प्रकर्षेण कटुविपाकतादर्शनेनोपशमं नीतः कामस्य प्रकृष्टो मोहः–उन्मादो मीहो वा येन स तथा, निवारितकामोद्रेक इत्यर्थः, जिनधर्मभावितमतेः कामनिवृत्तिसद्भावात्, तथा दृष्टादृष्टे–दृष्टा–दृष्टविषया ये बादरैकेन्द्रियादयो जीवाः पुद्गलस्कन्धादयोऽजीवाश्च, तथाऽदृष्टाः सर्वलोकवृत्तिसूक्ष्मैकेन्द्रियादिजीवा धर्माधर्मास्तिकायादयोऽजीवाश्च, स्वर्गनरकादयो वा येऽतिशयज्ञानज्ञानिगोचरास्तेषु दृष्टादृष्टेषु पदार्थेषु न कलितो–न प्राप्तो विरोधो–विपरीतप्ररूपणारूपो येन स तथा तं, केवलिप्रज्ञप्तत्वात् यथावस्थितस्वरूपावेदकमित्यर्थः, तथा शिवसुखमेव फलं तद्ददातीति शिवसुखफलदस्तं, अत एव न मोघोऽमोघः–अवन्ध्यः सफल इत्यर्थः तमेवंप्रकारं धर्मं शरणं प्रपन्नोऽहमिति ॥ ४६ ॥ पापकारिणो नरान् कायन्ति—आह्वयन्तीति नरका–रत्नप्रभादिषु सीमन्तकाद्यास्त एव गम्यन्ते इति गतिस्तत्र यद्गमनं तद् रुणद्धि–निवारयतीति नरकगतिगमनरोधस्तं, तथा गुणानां–क्षान्त्यादीनां संदोहः–समुदायो यत्र स तथा तं, तथा प्रकृष्टा वादिनः प्रवादिनः, निर्शब्दो निषेधार्थः, तैः प्रवादिभिः

न क्षोभ्यते इति प्रवादिनिक्षोभ्यस्तं, अथवा प्रवादिभ्यो निर्गतः क्षोभः–कल्पनं यस्य स तथा, यद्वा प्रवादिनां निः–नितरां क्षोभो यस्मात्स तथा तं, सुयुक्तियुक्तत्वेन श्रीसर्वज्ञोक्तत्वेन च वादिभिः क्षोभयितुमशक्य इत्यर्थः, 'निहणिय'त्ति निहतो–नाशं नीतो मन्मथयोधः–कामसुभटो येन स तथा, नवगुप्तिरचनारुचिरब्राह्मकवचाञ्चितत्वात् धर्मस्य, तं धर्मं शरणं प्रपन्नोऽहमिति ॥ ४७ ॥ अथ निधानोपमया धर्मस्य नमस्कारमाह–देवादिभासुरगतिहेतुत्वाद्भासुरः–शोभनो वर्णः–श्लाघागुणोत्कीर्त्तनरूपो यस्मात्स सुवर्णः, चारित्रवतामिन्द्रादिभिरपि श्लाघनीयत्वात्, तथा सुन्दरा-मनोज्ञा या क्रियाकलापविषया इच्छामिच्छेत्यादिदशविधसामाचार्यादिरूपा या रचना–विविधकल्पना सैव तया वाऽलङ्कारः–शोभाविशेषो यस्य स सुन्दररचनालङ्कारः, तथा गौरवं–महत्त्वं तद्धेतुत्वाद्धर्मोऽपि गौरवं तथा महानर्थो–माहात्म्यविशेषो यस्य स महार्थः, चारित्रवतामामर्षौषध्यादिमाहात्म्यविशेषसंभवात्, ततः पञ्चानामपि विशेषणानां कर्मधारयः, अथवा शोभनो वर्णः–श्लाघा तेन सुन्दरा या सामाचार्यादिरचना सैवालङ्कारो यस्येति एकमेव कार्यं, चारित्रपक्षेऽयं पूर्वोक्तोऽर्थः, श्रुतधर्मपक्षे तु रचना पदपङ्क्त्या भास्वरो ज्ञानादिभिः केवलिभिरुक्तत्वात् भास्वरः शोभना वर्णाः-अक्षराणि तेषां तथा सुन्दरा या विरचना तस्या योऽलङ्कारो–द्वात्रिंशत्सूत्रदोषपरिहारेणाष्टगुणधारणेन च शोभाविशेषः तस्माद् यद्गौरवं–गुरुत्वं अनन्तार्थवादिरूपं तेन महानर्थः–आधिक्यं पूजातिशयो वा यस्य स तथा, ततो विशेषणद्वयकर्मधारयः, अथवा भासुरेति वर्णविशेषणं कार्यं, यद्वा भासुरसुवर्णसुन्दररचनालंकारेण गौरवं–गुरुत्वं यस्य स तथा, महार्थमिति पृथक्कृत्वा समस्यते, निधिपक्षे पुनर्भासुरं–दीप्तिमत् सुवर्णं–कनकं सुन्दराणि यानि रत्नानि अलङ्कारा–हाराद्याभरणविशेषास्तै गौरवं–सम्पूर्णता



तेन महार्घो–बहुमूल्यः, 'दोगच्चि'ति चारित्रधर्मपक्षे दुष्टा गतिर्दुर्गतिः–कुदेवत्वकुमानुषत्वतिर्यग्नरकलक्षणा तस्या दुर्गतेर्भावो दौर्गत्यं, श्रुतधर्मपक्षे तु गत्यर्था ज्ञानार्था धातवः अतो गतिः–ज्ञानं दुष्टा गतिः दुर्गतिः अज्ञानमित्यर्थः तद्धरतीति दौर्गत्यहरं, निधानपक्षे तु दुर्गतस्य–दरिद्रस्य भावो दौर्गत्यं तद्धरतीति दौर्गत्यहरं दारिद्र्यापहारकृदित्यर्थः, एवंविधनिधानोपमितं धर्मं श्रीजिनैः–श्रीसर्वज्ञैः देशितं–उपदिष्टं वन्दे–नमस्कुर्वेऽहमित्यर्थः ॥ ४८ ॥

उक्तश्चतुःशरणरूपः प्रथमोऽधिकारः, अथ दुष्कृतगर्हारूपं द्वितीयमधिकारमाह—

चउसरणगमणसंचिअसुचरिअरोमंचअंचिअसरीरो ।
कयदुक्कडगरिहाअसुहकम्मक्खयकंखिरो भणइ ॥ ४९ ॥
इहभविअमन्नभविअं मिच्छत्तपवत्तणं जमहिगरणं ।
जिणपवयणपडिकुट्ठं दुट्ठं गरिहामि तं पावं ॥ ५० ॥
मिच्छत्ततमंधेणं अरिहंताइसु अवन्नवयणं जं ।
अन्नाणेण विरइअं इण्हिं गरिहामि तं पावं ॥ ५१ ॥
सुअधम्मसंघसाहुसु पावं पडिणीअयाइ जं रइअं ।
अन्नेसु अ पावेसु इण्हिं गरिहामि तं पावं ॥ ५२ ॥
अन्नेसु अ जीवेसु अ मित्तीकरणाइगोअरेसु कयं ।

परिआवणाइ दुक्खं इण्हिं गरिहामि तं पावं ॥ ५३ ॥
जं मणवयकाएहिं कयकारिअअणुमईहिं आयरिअं ।
धम्मविरुद्धमसुद्धं सव्वं गरिहामि तं पावं ॥ ५४ ॥

चतुःशरणगमनेन–चतुःशरणाङ्गीकारेण संचितं–राशीकृतं यत्सुचरितं–पुण्यं तेन योऽसौ रोमाञ्चो–रोमोल्लासस्तेनाञ्चितं–भूषितं शरीरं यस्य स तथा, चतुःशरणगमनार्जितसुकृतवशात् कंटकितगात्र इत्यर्थः, तथा कृतानि–इहभवेऽन्यभवे च विहितानि यानि दुष्कृतानि–पापकृत्यानि तेषां गर्हा–गुरुसमक्षं 'हा दुट्ठु कय'मित्यादिनिन्दा तया योऽसौ अशुभकर्मक्षयः–पापकर्मापगमः तत्र कांक्षिरः–आकांक्षावान् भणति, दुष्कृतगर्हातो यः पापापगमो भवति तमात्मनः समभिलषन् एवं वक्ष्यमाणं वदतीत्यर्थः ॥ ४९ ॥ यच्च भणति तदाह–इह–अस्मिन् भवे यत्कृतं तदिहभविकं, अन्यस्मिन् भवे भवमन्यभविकं अतीतभविष्यद्भवसंभवमित्यर्थो, मिथ्यात्वप्रवर्त्तनं–कुतीर्थिकदानसन्मानतद्देवार्चनतच्चैत्यकारापणाद्यधिकरणं, अन्यदपि चाधिकरणं भवनारामतटाकादिकारणसधनुःखड्गादिशस्त्रयन्त्रगन्त्रीहलोदूखलशृङ्खलादिविधापनदानादिरूपं यत्कृतमिति शेषः, तथाऽन्यच्च जिनप्रवचने यत्प्रतिकुष्टं–प्रतिषिद्धं दुष्टं तत्पापं गर्हामि–जुगुप्सामीत्यर्थः ॥ ५० ॥ उक्ता सामान्येन दुष्कृतगर्हा, सम्प्रति विशेषेण तामाह–मिथ्यात्वमेव तमः–अन्धकारः तेनान्धस्तेन मिथ्यात्वतमोऽन्धेन, मिथ्यात्वशास्त्रोपहतभावचक्षुषा जीवेनेति शेषः, 'अर्हदादिषु' अर्हत्सिद्धाचार्योपाध्यायादिषु पूजाबहुमानार्हेषु 'अवण्णवयणं जं'ति अवर्णवादवचनं–असद्दोषकथनं अवज्ञावचनं वा हीलारूपं यदज्ञानेन–विवेकशून्येन उक्तमिति



शेषः, तथा विरचितं–कृतं कारितमनुमतं चातीतानागतवर्तमानकाले, यच्चान्यदपि जिनधर्मप्रत्यनीकत्ववितथप्ररूपणापरदेवधर्मस्थानादिरूपं, इदानीमवगतपरमार्थस्तत्पापं गर्हामि–निन्दामि गुरुसमक्षमालोचयामीत्यर्थः ॥ ५१ ॥ श्रुतं च धर्मश्च संघश्च साधवश्च श्रुतधर्मसंघसाधवः तेषु पापं–आशातनारूपं प्रत्यनीकतया–विद्विष्टभावेन यद्रचितं, तत्र श्रुतस्य–द्वादशांगरूपस्य तदध्येत्रध्यापकानामुपरि यदरुच्यबहुमानादि चिन्तनं 'अज्ञानमेव शोभन'मिति भणता पूर्वभवे माषतुषस्येव धर्मप्रत्यनीकता 'कविला इत्थंपि इहयंपी'ति भणतो मरीचेरिव संघप्रत्यनीकतां संमेतशैलयात्रागच्छत्श्रीसंघविलुण्टकानां सगरसुतजीवपूर्वभवचौराणामिव साधुप्रत्यनीकता गजसुकुमालं प्रति सोमिलद्विजस्येव, तथा सर्वेषां–श्रुतधर्मार्हदाचार्योपाध्यायसाधूनामुपरि प्रत्यनीकता नमुचिदत्तगोशालकादीनामिव ज्ञेया, तथाऽन्येष्वपि पापेषु–अष्टादशसु प्राणातिपातादिषु यत् किमपि पापं–जीवव्यपरोपणादिकं कृतं तदप्यधुना गर्हामीत्यर्थः ॥ ५२ ॥ यच्चोक्तं–'अन्नेसु अ पावेसु'त्ति तदेव व्यक्तीकर्तुमाह—अन्येष्वपि जीवेषु–तीर्थकरादिव्यतिरिक्तेषु एकेन्द्रियादिसर्वभेदभिन्नेषु मैत्रीकारुण्यमाध्यस्थ्यानि विधेयतया गोचरो–विषयो येषां ते तथा तेषु कृतं–निष्पादितं 'परिआवणाइ'त्ति परितापनारूपमध्यपदग्रहणात्तुलादण्डन्यायेनाभिहतादिभिर्दशभिः पदैस्तेषु जीवेषु यत्किमपि दुःखं–कष्टं कृतमिदानीं तदपि पापं गर्हामि–जुगुप्साम्यालोचयामीतियावत् ॥ ५३ ॥ अथोपसंहारमाह—यत्किञ्चित् पापं कृत्यं मनोवाकायै रागद्वेषमोहाज्ञानवशात् कृतकारितानुमतिभिराचरितं–विहितं धर्मस्य–जिनधर्मस्य विरुद्धं–प्रतिकूलं अतएवाशुद्धं–सदोषं सर्वं–

समस्तमपि तत्पापं गर्हामि–अपुनःकरणेनाङ्गीकरोमि–गुरुसन्निधावालोचयामि ॥ ५४ ॥ उक्तो दुष्कृतगर्हारूपो द्वितीयोऽधिकारः, अधुना सुकृतानुमोदनारूपं तृतीयाधिकारमाह—

**अह सो दुक्कडगरिहादलिउक्कडदुक्कडो फुडं भणई ।**
**सुकडाणुरायसमुइण्णपुण्णपुलयंकुरकरालो ॥ ५५ ॥**
**अरिहंतं अरिहंतेसु जं च सिद्धत्तणं च सिद्धेसु ।**
**आयारं आयरिए उवज्झायत्तं उवज्झाए ॥ ५६ ॥**
**साहूण साहुचरिअं देसविरइं च सावयजणाणं ।**
**अणुमन्ने सव्वेसिं सम्मत्तं सम्मदिट्ठीणं ॥ ५७ ॥**
**अहवा सव्वं चिय वीअरायवयणाणुसारि जं सुकडं ।**
**कालत्तएवि तिविहं अणुमोएमो तयं सव्वं ॥ ५८ ॥**

'अथे'ति दुष्कृतगर्हानन्तरं सः–साध्वादिको जीवः, कथम्भूतः?–दुष्कृतगर्हया–दुश्चरित्रनिन्दनेन दलितानि–चूर्णीकृतानि उत्कटानि–प्रबलानि दुष्कृतानि–पापानि येन स तथा, दुष्कृतगर्हया प्रतिहतमहापातकनिकर इत्यर्थः, एवंविधः सन् स्फुटं यथा स्यादेवं भणति, पुनः स किंभूतः?–सुकृतानुरागेण–सुचरितबहुमानेन समुदीर्णाः–संजाताः पुण्यबन्धहेतुत्वात् पुण्याः–पवित्रा ये पुलकाङ्कुरा–रोमोद्गमविशेषाः तैः करालो–व्याप्तः कर्मवैरिणं प्रति भीषणो वा ॥ ५५ ॥



यद्भाषते तद्गाथाद्वयेनाह—अर्हत्त्वं–तीर्थंकरत्वं प्रतिदिनं द्विर्धर्मदेशनाकरणभव्यनिकरप्रतिबोधनतीर्थप्रवर्त्तनादिकं अर्हत्सु तदनुमन्येऽहमिति सम्बन्धः, यच्च सिद्धत्वं–सदा केवलज्ञानोपयुक्तत्वसर्वकर्मविमुक्तत्वनिरुपमसुखभोक्तृत्वादिरूपं सिद्धेषु अनुमन्ये, तथाऽऽचारं–ज्ञानाचारादिरूपं पञ्चविधमाचार्येषु अनुमन्ये, तथा उपाध्यायत्वं–सिद्धान्ताध्यापकत्वरूपमुपाध्यायेऽनुमन्ये इति ॥ ५६ ॥ तथा साधूनां–सामायिकादिचारित्रवतां पुलाकबकुशादिभेदभिन्नानां जिनकल्पिकप्रतिमाधरयथालन्दिकपरिहारविशुद्धिककल्पातीतप्रत्येकबुद्धबोधितादिभेदैरनेकविधानां सर्वकालक्षेत्रविशेषितानां साधुचरितं–चरणादिक्रियाकलापं ज्ञानदर्शनचारित्रधारित्वसमभावत्वासहायसहायत्वादिरूपं वाऽनुमन्ये, 'साहुकिरिय'–मिति पाठान्तरे तु साधुक्रियां–सर्वसाधुसामाचारीरूपां इत्यर्थः, तथा देशविरतिं–सम्यक्त्वाणुव्रतगुणव्रतशिक्षाव्रतैकादशप्रतिमादिरूपां, केषां?–'श्रां पाके'श्रान्ति–पचन्ति तत्त्वार्थश्रद्धानं निष्ठां नयन्तीति श्राः 'डुवपी बीजसंताने' वपन्ति–जिनभवनादिसप्तक्षेत्रेषु निजधनबीजानि इति वाः 'कृत् विक्षेपे' किरन्ति–विक्षिपन्ति क्लिष्टकर्मरज इति काः, श्राश्च वाश्च काश्च श्रावकास्ते च ते जनाश्च श्रावकजनास्तेषां श्रावकत्वमनुमन्ये, तथा सर्वेषां सम्यक्त्वं सम्यक्त्वं–जिनोक्ततत्त्वश्रद्धानरूपं 'तमेव सच्चं निस्संकं जं जिणेहिं पवेइअ'मिति निश्चयलक्षणं अनुमन्ये, केषां?–सम्यग्–अविपर्यस्ता दृष्टिः–दर्शनं येषां ते सम्यग्दृष्टयः तेषां सम्यग्दृष्टीनां, अविरतानामपि सुरैरप्यचाल्यसम्यक्त्वानां श्रेणिकादीनामित्यर्थः ॥ ५७ ॥ अथ सर्वानुमोदनार्हसंग्रहमाह—'अथवे'ति सामान्यरूपप्रकारदर्शने 'चिअ' एवकारार्थे, ततः सर्वमेव वीतरागवचनानुसारि–जिनमतानुयायि यत् सुकृतं–जिनभवनबिंबकरणतत्प्रतिष्ठासिद्धान्तपुस्तकलेखनतीर्थ-

यात्राश्रीसंघवात्सल्यजिनशासनप्रभावनाज्ञानाद्युपष्टंभधर्मसान्निध्यक्षमामार्दवसंवेगादिरूपं मिथ्यादृक्संबन्ध्यपि मार्गानुयायि कृत्यं कालत्रयेऽपि त्रिविधं मनोवाक्कायैः कृतं कारितमनुमतं च यदभूत् भवति भविष्यति चेति 'तकत्' इति तत्शब्दात् 'त्यादिसर्वादेः स्वरेष्वंत्या' ( श्री सि. अ. ७ पा. ३ सू. २९ ) दिति सूत्रेण स्वार्थेऽक्प्रत्यये रूपं, तदित्यर्थः, तत् सर्वं–निरवशेषमनुमोदयामः–अनुमन्यामहे, हर्षगोचरतां प्रापयाम इत्यर्थः, बहुवचनं चात्र पूर्वोक्तचतुःशरणादिप्रतिपत्त्या उपार्जितपुण्यसंभारत्वेन स्वात्मनि बहुमानसूचनार्थं ॥ ५८ ॥ तदेवमुक्तः सुकृतानुमोदनारूपस्तृतीयोऽधिकारः, अथ चतुःशरणादिकृत्ये यत्फलं स्यात्तद्गाथाद्वयेनाह—

**सुहपरिणामो निच्चं चउसरणगमाइ आयरं जीवो ।**
**कुसलपयडीउ बन्धइ बद्धाउ सुहाणुबन्धाओ ॥ ५९ ॥**
**मन्दणुभावा बद्धा तिव्वणुभावाउ कुणइ ता चेव ।**
**असुहाउ निरणुबंधाउ कुणइ तिव्वाउ मन्दाओ ॥ ६० ॥**

शुभपरिणामः–प्रशस्तमनोऽध्यवसायः सन् नित्यं–सदैव चतुःशरणगमनादि–चतुःशरणगमनदुष्कृतगर्हासुकृतानुमोदनान्याचरन्–कुर्वन् साधुप्रभृतिको जीवः कुशलं–पुण्यं तत्प्रकृतीः 'साउच्चगोअमणुदुगे'त्यादिगाथोक्ताः द्विचत्वारिंशत्संख्याः बध्नाति, शुभाध्यवसायबध्यमानत्वात्तासां, तथा ताश्च प्रकृतीर्बद्धाः सतीः शुभाध्यवसायवशाच्छुभोऽनुबन्धः–उत्तरकालफलविपाकरूपो यासां ताः शुभानुबन्धाः एवंविधाः करोतीत्यर्थः, तथा ता एव शुभप्रकृतीः



प्राग्मन्दानुभावाद् बद्धाः–स्वल्पशुभपरिणामवशान्मन्दरसा बद्धा विशिष्टतरशुभाध्यवसायवशात्तीव्रोऽनुभावो–रसो यासां तास्तीव्रानुभावाः—अत्युत्कटरसाः करोति, उपलक्षणादल्पकालस्थितीः दीर्घकालस्थितीः करोति अल्पप्रदेशका बहुप्रदेशकाश्च करोतीत्यपि ज्ञेयं, तथा 'असुहाउ'त्ति याश्चाशुभा 'नाणंतरायदसग'मित्यादिगाथोक्ता द्व्यशीतिसंख्याः पूर्वं बद्धाः स्युस्ता निर्गतोऽनुबन्धः–उत्तरकालफलविपाकरूपो याभ्यस्ताः निरनुबन्धाः एवंविधाः करोति, तद्विपाकजनितं दुःखमुत्तरकाले तस्य न भवतीत्यर्थः, तथा ता एव यास्तीव्राः–तीव्ररसाः प्राक् तीव्राशुभपरिणामेन बद्धास्ता मन्दाः–मन्दरसाः करोति चतुःशरणगमनादिरूपशुभाध्यवसायबलाद् , अत्रापि उपलक्षणाद्दीर्घकालस्थितीरल्पकालस्थितीर्बहुप्रदेशका अल्पप्रदेशकाश्च करोतीत्यपि ज्ञेयं, शुभपरिणामवशादशुभप्रकृतीनां स्थितिरसप्रदेशानां ह्राससम्भवात्, वन्दनकदानात् श्रीविष्णोरिवेत्यर्थः ॥ ६० ॥ उक्तं चतुःशरणप्रतिपत्त्यादेर्महत्फलं, अत एव तदवश्यं कर्त्तव्यमिति दर्शयति—

**ता एयं कायव्वं बुहेहि णिच्चंपि संकिलेसम्मि ।**
**होइ तिकालं सम्मं असंकिलेसंमि सुकयफलं ॥ ६१ ॥**

'ता'इति तस्मात्कारणात् 'एयं'ति एतदनन्तरोक्तं चतुःशरणादि कर्तव्यमिति–विधेयं विबुधैः–अवगततत्त्वैर्नित्यमपि–सततमपि, कस्मिन्?–संक्लेशे–रोगाद्यापद्रूपे, एतेन यथा कर्षकैः शाल्यादिबीजं शस्यनिष्पत्तये उप्तमपि पलालाद्यानुषङ्गिकं जनयति एवं चतुःशरणाद्यपि सततं कर्मनिर्जरायै क्रियमाणमिहलोकेऽपि रोगाद्युपसर्गोपशान्तिं तनोतीति दर्शितं, तथा असंक्लेशो–रोगाद्यभावस्तस्मिन् चतुःशरणादि भवति त्रिकालं–सन्ध्यात्रयरूपे काले विधीयमान-

मिति शेषः, सम्यग्मनोवाक्कायोपयुक्ततया, कथं भवतीत्याह—'सुगईफलं'ति शोभना गतिः सुगतिः—स्वर्गापवर्गरूपा सैव फलं यस्य तत्सुगतिफलं, स्वर्गमोक्षप्राप्तिफलमित्यर्थः, सम्यक्कृचतुःशरणादिकृतां साधूनामुत्कर्षतो मोक्षं यावत् श्राद्धानामच्युतं यावच्च गतेः श्रीसिद्धान्ते प्रोक्तत्वात्, 'सुकयफल'मिति पाठे तु सुकृतं—पुण्यं शुभानुबन्धि तत्प्राप्तिः फल भवतीत्यर्थः ॥ ६१ ॥ अथ योऽतीव दुर्लभां मनुष्यत्वादिसामग्रीं प्राप्यापि चतुःशरणादि प्रमादादिना न कृतवान् तं शोचयति—

**चउरंगो जिणधम्मो न कओ चउरंगसरणमवि न कयं।**
**चउरंगभवच्छेओ न कओ हा हारिओ जम्मो ॥ ६२ ॥**

चत्वारि—दानशीलतपोभावनारूपाणि अङ्गानि यस्य स चतुरङ्गो—दानादिचतुष्प्रकार इत्यर्थः जिनधर्मः—अर्हद्धर्मो न कृतो—न विहितः आलस्यमोहादिभिः कारणैर्विगतविवेकत्वात्, तथा न केवलं चतुरङ्गधर्मो न कृतः, किन्तु चतुरङ्गं शरणमपि—अर्हत्सिद्धसाधुधर्मरूपमपि न कृतं, तथा चतुरङ्गभवस्य—नरकतिर्यन्नरामरलक्षणस्य छेदो—विनाशो विशिष्टचारित्रतपश्चरणादिना न कृतो येनेत्यध्याहार्यं तेन 'हा' इति खेदे हारितं—वृथा नीतं जन्म—मनुष्यभवः, प्राकृतत्वात्पुंस्त्वं, तस्य हारणं च अकृतधर्मस्य जीवस्य पुनरतिशयेन मानुषस्य दुष्प्रापत्वाद् अथवा स एव प्रमादादिना पूर्वमनाराधितजिनधर्मा अन्त्यसमये संजातविवेकः स्वयमात्मानं शोचयति—चतुरङ्गो जिनधर्मो मया न कृत इत्यादि



हा मया हारितं—निष्फलीकृतं मनुष्यजन्म, देवा अपि विषयप्रमादादकृतजिनजन्मोत्सवादिपुण्याश्च्यवनसमये अनेनैव प्रकारेण खेदं कुर्वन्ति ॥ ६२ ॥ अथ प्रस्तुताध्ययनोपसंहारमाह—

**इइ जीव पमायमहारिवीरभद्दन्तमेवमज्झयणं।**
**झाएसु तिसंझमवंझकारणं निव्वुइसुहाणं ॥ ६३ ॥**

'इति' उक्तप्रकारेण हे जीव!—हे आत्मन्! एतदध्ययनं ध्याय—स्मर त्रिसन्ध्यं—संध्यात्रये इति संबन्धः, कथंभूतं?—'पमायमहारिवीरं'ति प्रमादा एव महान्तोऽरयः—शत्रवः, चतुर्दशपूर्वधरादीनामपि निगोदादिदुर्गतिपातहेतुत्वात्प्रमादस्य, तेषां प्रमादमहारीणां विनाशाय वीरवद्वीरं सुभटकल्पमित्यर्थः, प्राकृतत्वादनुस्वारलोपः, पुनः कथंभूतं?—भद्रमन्ते यस्मात्तद्भद्रान्तं—मोक्षप्रापकमित्यर्थः, अथवा हे वीर हे भद्रेति संबोधनपदद्वयं जीवस्योत्साहवृद्धिहेतुः, 'अंत'मिति जीवितान्तं यावदेवैतदध्ययनं ध्यायेत्यर्थः, पुनः किंभूतं?—अवन्ध्यकारणं—सफलकारणं, केषां?—निर्वृत्तिः—मोक्षस्तत्सुखानामिति, 'जिअ'इति पाठे तु जितप्रमादमहारिपुर्योऽसौ वीरभद्रः साधुः श्रीवीरसत्कचतुर्दशसहस्रसाधुमध्यवर्ती तस्येदं जितं तदेतदध्ययनं ध्यायेत्यादि, एवं शास्त्रकर्तुः समासगर्भमभिधानमुक्तं, अस्य चाध्ययनस्य वीरभद्रसाधुकृतत्वज्ञापनेन यस्य जिनस्य यावन्तो मुनयो वैनयिक्यौत्पत्तिक्यादिबुद्धिमन्तः प्रत्येकबुद्धा अपि तावन्त एव प्रकीर्णकानि अपि तावन्ति भवन्तीति ज्ञापितं भवतीति गाथार्थः ॥ ६३ ॥ इतिश्रीचतुःशरणप्रकीर्णकावचूर्णिरियं सम्पूर्णा ॥

# विषयानुक्रमणिका.

श्रीतंदुलवैचारिकं—चतुःशरणं च समाप्तम् ।

इति श्रेष्ठि-देवचन्द्र-लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः ५९.

# शेठ देवचंद लालभाई जैन पुस्तकोद्धार फण्ड.





जव्हेरी बजार—मुंबई. संवत् १९८० ब्रान्च गोपीपुरा—सुरत.

६०००-८-२४.